ઉ૦—શુદ્ધ ક્રિયા કરતાં ઉપયોગ પૂર્વક પ્રમાર્જન વગેરે વિધિથી ઉપવેશન–બેસવું વગેરે ક્રિયાઓમાં ઇરિયાવહીયા આવતી નથી, કારણ કે ઇરિયાવહીયાને આશ્રયીને કાલમાન કહેલું જાણ્યું નથી. તો પણ અન્ય ક્રિયા કરતાં ઇરિયાવહીયાનું પ્રતિક્રમણ કરાય છે. કારણ કે ઘણો સમય થતાં મન વચન અને કાયાના ઉપયોગનું સમ્યગ્જ્ઞાન રહેતું નથી. ૪–૬–૨–૭૫–૩૦૫

પ્ર૦ ૩—અષ્ટાપદ પર્વત ઉપર ભરત ચક્રવર્તિનાં કરાવેલાં સિંહનિષદ્યા વગેરે મંદિરો અને મંદિરમાં સ્થાપેલાં બિંબો હજુ સુધી કેમ રહ્યાં છે? તથા શત્રુંજય પર્વત ઉપર ભરતનાં કરાવેલાં મંદિરો અને બિંબો કેમ રહ્યાં નથી? કારણ કે શત્રુંજય ઉપર અસંખ્યાતા ઉદ્ધારો થયેલા સંભળાય છે. તેથી અષ્ટાપદ ઉપર કોનું સાન્નિધ્ય છે અને શત્રુંજય ઉપર કોનું નથી કે જેથી આટલો ભેદ છે, એ સ્પષ્ટ રીતે જણાવવા કૃપા કરશો?

ઉ૦—અષ્ટાપદ પર્વત ઉપર ભરત ચક્રવર્તિનાં કરાવેલાં મંદિર વગેરેનું સ્થાન અપાય–હાનિ વિનાનું હોવાથી, દેવ વગેરેની સાન્નિધ્યતાવાળું હોવાથી અને "અષ્ટાપદ પર્વત ઉપરનાં મંદિરો કેટલા કાલ સુધી રહેશે? એમ પ્રધાનને પૂછવામાં આવ્યું ત્યારે પ્રધાને જણાવ્યું કે–આ અવસર્પિણી સુધી ટકી રહેશે એમ મેં કેવલિ જીન પાસેથી સાંભળ્યું છે" ઇત્યાદિ વસુદેવ હિણ્ડિના અક્ષરો હોવાથી અત્યાર સુધી ટકી રહેવું યુક્તિ યુક્ત જ છે. શત્રુંજય તો, એક તો સ્થાન અપાયવાળું હોવાથી અને બીજું તથાપ્રકારના દેવ વગેરેનું સાન્નિધ્ય

નહિ હોવાથી ભરતે કરાવેલાં મંદિરો આદિનું અવસ્થાન અત્યાર સુધી રહ્યું નથી, એમ સંભાવના થાય છે. તત્ત્વ તો તત્ત્વવેત્તા જાણે. ૪-૬-૩-૭૬-૩૦૬

इति श्रीसकलसूरिपुरन्दरपरमगुरुतपोगच्छगगनदिनमणि-परमपूज्य आचार्यप्रवर-सिद्धान्तमहोदधि-शासनप्रभावक-**श्रीमद्विजयप्रेमसूरिसाम्राज्ये** तत्पट्टप्रभाकर-प्रवचनप्रभावक-प्रौढगीतार्थ-आगमप्रज्ञ-सूरिप्रवर-पूज्य-गुरुदेव-**श्रीमद्विजयजम्बूसूरिवराणामन्तेवासि-मुनिश्रीचिदानन्दविजयेन** सटिप्पणकमनुवादिते जगद्गुरुपूज्यपाद-श्री १००८ **विजयहीरसूरिशिष्यश्री पं. श्रीकीर्तिविजयगणिसमुच्चितश्रीविजयहीरसूरिप्रसादित-प्रश्नोत्तरसमुच्चये चतुर्थः प्रकाशः समाप्तः**

तत्समाप्तौ च चतुःप्रकाशकात्मकप्रश्नोत्तरसमुच्चयानुवादः समाप्तिमगमत् ॥



ॐ नमः

पू. पा. गुरुदेव–आ. प्र. आचार्य श्रीमद् विजयजंबूसूरिभ्यो नमो नमः।

सुगृहीतनामधेयजगद्गुरु–विनेयरत्न–वाचकचूडामणि–
श्रीकीर्त्तिविजयगणिसमुच्चितः।

# हीरप्रश्नापरनामा प्रश्नोत्तरसमुच्चयः।

## प्रथमः प्रकाशः।

स्वस्तिश्रियो निदानं जन्तूनां धर्मकारिणां सम्यक्।
श्रीवर्द्धमानतीर्थाधिराजमभिनम्य सद्भक्त्या ॥१॥
गीतार्थसार्थनिर्मितपृच्छानामुत्तराणि लिख्यन्ते।
श्रीहीरविजयसूरिप्रसादितानि प्रबोधाय ॥२॥ युग्मम् ॥

### महोपाध्यायश्रीविमलहर्षगणिकृतप्रश्ना (स्तत्प्रतिवचांसि च) यथा—

"गच्छगओ अणुओगी" इति गाथायां षड्विंशतिभेदास्तत्र पञ्चविंशतिभेदेषु द्वित्रिचतुर्गुणसद्भावतः संयमाराधकत्वेन वन्द्यत्वम्, उतैकद्वित्रिदोषसद्भावेन तद्विराधकत्वादवन्द्यत्वम्? इति प्रश्नोऽत्रोत्तरम्–"गच्छगओ अणुओगी" इतिगाथोक्तपञ्चविंशतिभेदेषु द्व्यादिगुणसद्भावे इतरदोषाणां

च सालम्बनसेवित्वेन संयमाराधकत्वाद्वन्द्यत्वमेव । निरालम्बनसेवित्वे त्ववन्द्यत्वमेव ॥१॥

तथा—"पद्मारिसे पंचकुसीलसंवुडे रूवंधरे" इति पापश्रमणीयाध्ययनोक्तलक्षणानां साधुत्वाद्वन्द्यत्वम्, उत पार्श्वस्थादिलक्षणोपेतत्वादवन्द्यत्वम्? इति प्रश्नोऽत्रोत्तरम्—"पद्मारिसे पंचकुसीलसंवुडे" इति गाथाव्याख्याने पार्श्वस्थादिलक्षणोपेतानामपि निकृष्टसाधुपदवर्तित्वं व्याख्यातमस्ति तदपि सालम्बनसेवित्वादेवेति तेषामपि वन्द्यत्वमेव ॥२॥

तथा—पञ्चविंशतिभङ्गाश्रितानाम् "पद्मारिसे" इति गाथोक्तलक्षणोपेतानां च साधूनां षष्ठसप्तमगुणस्थानवर्तित्वम्, उत मतान्तरेण मुहूर्त्ताद्बहुकालस्थायिषष्ठगुणस्थानकवर्तित्वम्? इति प्रश्नोऽत्रोत्तरम्—तथा पञ्चविंशतिभङ्गाश्रितानाम् "पद्मारिसे पंच" इतिगाथोक्तलक्षणानां च साधूनां षष्ठसप्तमगुणस्थानवर्तित्वम् । मतान्तरेण तु मुहूर्त्ताद्बहुकालावस्थायिषष्ठगुणस्थानवर्तित्वं चेत्युभयमपि भवतु, अध्यवसायानां वैचित्र्यात् तथाविधव्यक्ताक्षरानुपलम्भाच्च ॥३॥

तथा—"जो चयइ उत्तरगुणे मूलगुणे वि" इत्यत्र अचिरत्वं संवत्सरादिकालनियमेन सामान्येन वा? इति प्रश्नोऽत्रोत्तरम्—"अन्यच्च जो चयइ उत्तरगुणे" इतिगाथाया-मचिरेणेति पदमुत्तरगुणत्यागप्रतिषेधपरम्, कालनियमस्तु कर्तुं न शक्यते; कस्यचित्पतितपरिणामस्योत्तरगुणत्यागादचिरेणापि मूलगुणभ्रंशो भवति, तदितरस्य तु चिरेणापि न भवतीति ॥४॥

तथा—क्षपणकादीनां दर्शनानामन्यतमः कश्चित्परगण-साधूनां वन्दनाऽर्चनभक्तपानवस्त्रादिदानादिकं विदधाति कश्चित्

तद्वैपरीत्यं करोति, तयोः फले साम्यं कश्चिद्विशेषो वा? प्रश्नोऽत्रोत्तरम्-अपरं च दशानां मध्ये यः कश्चन साधूनां वन्दनाऽर्चनभक्तपानवसतिदानादिकं करोति तस्य शुभमेव फलम्, यस्तु वैपरीत्यं विदधाति तस्याशुभमेवेति ज्ञातमस्ति ।५।

तथा—तन्मध्यस्थः कश्चित्प्रासादादिरक्षणाय यतते, तदन्यस्तु वैपरीत्यभाक्, तयोरपि साम्यं विशेषो वा? इति प्रश्नोऽत्रोत्तरम्-तथा तेषां प्रासादादिरक्षणयत्नविधाने शुभमेव फलं तद्विपरीतविधाने त्वशुभमेव ।६।

तथा—ज्ञानदर्शनचारित्रतपःप्रभृति शुभं कुर्वतां सङ्घस्थानां साम्निध्यम्, तदन्यस्तु वैपरीत्यं करोति तयोः साम्यं न वा? इति प्रश्नोऽत्रोत्तरम्-एवं ज्ञानादि शुभं समाचरतां सङ्घस्थानां सान्निध्यासान्निध्ययोरपि ।७।

तथा—वर्णादिभिर्भेदे जात्या शुनामिव दशानां परस्परं मतभेदेऽप्याज्ञाविराधकत्वेन साम्यम्, किंवा विशेषः? इति प्रश्नोऽत्रोत्तरम्-तथा दशानां वर्णादिविचित्रश्च साम्यप्रतिपादकं वचस्तु नात्मीयं किन्तु परकीयमेव ।८।

तथा—चैत्यादिधर्मकार्यं कुर्वतामेषां तपागणसम्बन्धी शक्तिमान् श्राद्धः साम्निध्यं माध्यस्थ्यं विकारं वा भजते तदा लाभो न वा? इति प्रश्नोऽत्रोत्तरम्-चैत्यादिधर्मकार्यं कुर्वतां तेषां श्रीपरमगुरुपादैरुपदेयत्वयादिष्टचैत्यादिधर्मकार्ये सान्निध्यकरणमायतिसुन्दरम्, तदितरकार्ये तु माध्यस्थ्यमेव, न तु क्वापि वैपरीत्यकरणेन विरोधोत्पादनं श्रेयसे ।९।

तथा—नवानां लुम्पाकव्यतिरिक्तानां प्रतिमापूजास्तुती

अशुचिविलेपनगालीप्रदानरूपे अथवा पूजास्तुतिरूपे? इति प्रश्नोऽत्रोत्तरम्—नवानां पूजास्तुती अशुचिविलेपनगालीप्रदानरूपे इत्यादिवचनं तु सतामुच्चारार्हमेव न भवतीति किं प्रतिवचनेन ? ॥१०॥

तथा—केषाञ्चित्सङ्घभक्तिं कुर्वतामभक्तिं च कुर्वतां भूतात्तमघपथवत्साम्यम्, उत भक्तिजनितशुभप्रकृतिफलोदयो वा जन्मान्तरे ? इति प्रश्नोऽत्रोत्तरम्—सङ्घभक्तिमभक्तिं च कुर्वतां भूतात्तमघपथवत्साम्यमित्यादिवाक्यं पूर्ववदेव प्रत्युत्तरितं बोध्यम् ।११॥

तथा—एतेषां नमस्कारपाठबन्दिमोचनब्रह्मपालनादिकं किञ्चित्केषाञ्चिन्मार्गाऽनुयायि, किंवा सर्वेषां शौनिकलुब्धकधीवराध्यवसायवत्पापहेतु ? इति प्रश्नोऽत्रोत्तरम्—"एतेषां॰" इत्यादिवचः सतां वक्तुमेवानुचितमिति किं प्रतिवचसा ?॥१२॥

तथा—परपाक्षिकसंपादितस्तोत्रादिकं मातङ्गतुरुष्कादिसंपादितरसवतीवदनास्वाद्यमेव, कश्चिद्विशेषो वा ? इति प्रश्नोऽत्रोत्तरम्—परपाक्षिकसंपादितस्तोत्रादीनां मातङ्गतुरुष्कादिसंपादितरसवत्युपमानं, सतां वक्तुमेवानुचितमिति किं प्रतिवचनेन ? ॥१३॥

तथा—तपागणसम्बन्धी श्राद्ध स्वकीयस्वकीयेतरचैत्येषु चन्दनादिकं मुञ्चति, तत्र स्वकीयचैत्ये लाभहेतुरन्यत्र पापहेतु, किं वोभयत्र साम्यम् ? इति प्रश्नोऽत्रोत्तरम्—तपापक्षीय श्राद्धः स्वकीयेषु, परकीयेषु वा चैत्येषु चन्दनादि मुञ्चति, तत्र स्वकीयेषु यथा लाभस्तथा श्रीपरमगुरुपादैराहेयतयादिष्टेषु परकीयेष्वपि लाभ एव ज्ञातोऽस्ति न तु पापम् ॥१४॥

तथा—द्वितीयादिपञ्चपर्वी श्राद्धविध्यादिस्वीयग्रन्थातिरिक्तग्रन्थे क्वास्ति? इति प्रश्नोऽत्रोत्तरम्–द्वितीयादिपञ्चपर्व्या उपादेयत्वं संविग्नगीतार्थाचीर्णतया संभाव्यते, अक्षराणि तु श्राद्धविधेरन्यत्र दृष्टानि न स्मरन्ति (स्मर्यन्ते) ॥१५॥

तथा—"मासम्मि पव्वछक्कं तिण्णि अ पव्वाइं पक्खम्मि" इति गाथोक्ता चतुष्पर्वी सर्वश्राद्धानाम्, किंवा लेपश्राद्धाधिकारवर्णिता? इति प्रश्नोऽत्रोत्तरम्–"मासम्मि" इतिगाथोक्तैव चतुष्पर्वी सर्वश्राद्धानां संभाव्यते, न तु लेपश्राद्धाधिकारोक्तेति ॥१६॥

तथा—महाविदेहेषु कल्याणकतिथ्यादिकमिदमेव,अन्यद्वा? इति प्रश्नोऽत्रोत्तरम्–महाविदेहेषु कल्याणकतिथ्यादिकमिदमेवेति न संभाव्यते, यदात्रत्यतीर्थंकृतां च्यवनादिकल्याणकं तदा तत्र दिवससद्भावात्। तत्प्रतिपादकान्यक्षराण्यपि नोपलभ्यन्ते ॥१७॥

तथा—षाण्मासिकयोगोद्वाहकानां षडदिवसाधिकैर्वा षड्दिवसहीनैर्वा षण्मासैरालोचना दीयते? यदि चाधिकैस्तदानीमस्वाध्यायसम्बन्धिद्वादशदिनक्षेपवच्चातुर्मासिकाऽस्वाध्यायदिनचतुष्टयमपि कथं न निक्षिप्यते? तथा च दशदिनाधिकाः षण्मासा भवन्तीति कथमालोचनाविधिः? इति प्रसाद्यम् इति प्रश्नोऽत्रोत्तरम्–षाण्मासिकयोगवाहिनां षड्दिवसाधिकैः षण्मासैरस्वाध्यायदिनगणनानिरपेक्षमेवालोचना दातव्येति वृद्धसंप्रदाय इति ॥१८॥

तथा—चतुर्थयामे कदाचिद्घटिकाचतुष्टयावसाने कालद्वये गृहीतेऽथवैकस्मिन् काले गृहीते द्वितीये गृह्यमाणे उल्का-

पातादिकं व्योमस्थं कालप्रतिबन्धि कारणं भवति तदा कालत्रयमेको वा तिष्ठति? अथवा नेति?। किञ्च प्रथमादिषु कालेषु गृह्यमाणेऽन्तराऽन्तरा दिगालोकः किमर्थं विधीयते कालस्य शुद्धत्वात्? इति प्रश्नोऽत्रोत्तरम्–निशाविरामे कालग्रहणादनूल्कादौ जातेऽपि कालोपघातो न भवति। द्वितीये गृह्यमाणे उल्कादौ जाते तु कारणं विनैकोऽपि न शुध्यति, तथा कालग्रहणानन्तरमपि दिगालोको न मुच्यत इति वृद्धपारम्पर्यमिति ॥१९॥

तथा—प्राभातिकस्थाने वेरत्ती(वैरात्रिक-)स्थापनमाकसन्धिकार्ये स्वभावाद्वृत्त्या वा? इति प्रश्नोऽत्रोत्तरम्–प्राभातिकस्थाने वेरत्ती(वैरात्रिक-)कालस्य स्थापनमाकसन्धिकारण एव नान्यथेति बोध्यम् ॥२०॥

## अथ महोपाध्यायश्रीकल्याणविजयगणिकृत–प्रश्नास्तत्प्रतिवचांसि च यथा—

प्रथमायां श्राद्धप्रतिमायां दर्शनिद्विजादिभिक्षुकाणामन्नादि दातुं कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्–प्रथमश्राद्धप्रतिमायां दर्शनिद्विजादिभ्योऽनुकम्पादिनाऽन्नादि दातुं कल्पते, न तु गुरुबुद्ध्येति तत्त्वम् ॥१-२१॥

तथा—कुलगुरुतादिसम्बन्धेन समागतानां दर्शन्यादीनामपि (अन्नादि दातुं कल्पते न वा)? इति प्रश्नोऽत्रोत्तरम्–एवं कुलगुरुतादिसम्बन्धेनागतानां लिङ्गिना (अनुकम्पादिना) दातुं कल्पते ॥२-२२॥

तथा—नवमप्रतिमादिषु देशावकाशिकं कर्तुं युज्यते न वा? इति प्रश्नोऽत्रोत्तरम्–नवमप्रतिमादिषु देशावकाशिकस्याकरणमेव प्रतिभाति ॥३-२३॥

तथा—क्वचिल्लिखितविधौ "दशमप्रतिमायां कर्पूरवासादिभिर्जिनानां पूजा कर्त्तव्या" इति लिखितमस्ति, तद्विषये कियतीः प्रतिमा यावच्चन्दनपुष्पादिभिः, पूजा, कियतीषु च कर्पूरवासादिभिः कस्यां च न? इति प्रश्नोऽत्रोत्तरम्—प्रतिमाधरश्रावकाणां सप्तमप्रतिमां यावच्चन्दनपुष्पादिभिरर्हदर्चनमौचित्यमञ्चति ललितविस्तरापञ्जिकाभिप्रायेण, न त्वष्टम्यादिषु। कर्पुरादिपूजा त्वष्टम्यादिष्वपि नानुचितेति ज्ञायते तेषां निरवद्यत्वादिति। अक्षराणि तु ग्रन्थस्थानि नोपलभ्यन्त इति। एकादश्यां च साधुवदेवेति बोध्यम् ॥४-२४॥

तथा—"आणाखंडणकारी" इतिगाथायां यदुत्सूत्रप्रवर्तिनां पूजादिविधेर्नैरर्थक्यमुक्तमस्ति तत्किं फलमात्रापेक्षया तद्विशेषापेक्षया वा? इति प्रश्नोऽत्रोत्तरम्—"आणाखंडणकारी" इतिगाथायामुत्सूत्रप्रवर्त्तिनां यत्पूजादिविधेर्नैरर्थक्यमुक्तं तन्मोक्षलक्षणफलविशेषापेक्षया न तु फलमात्रापेक्षया ॥५-२५॥

तथा—जम्बूद्वीपप्रज्ञप्तौ जीवाभिगमे च जगतीवर्णनाधिकारे "पुरा पुराणाणं सुचिण्णाणं सुपरिकंताणं सुभाणं कल्लाणाणं कडाणं कम्माण फलविसेसं पच्चणुभवमाणा विहरंति" अत्र 'वाणमंतरा देवा य देवीओत्ति' विशेष्यं संबध्यते, तथा चात्र यत्पुरातनं कृत्यं श्लाघितं वर्त्तते तत्किमाराधकसम्यग्दृष्ट्यादिसत्कम्, उतान्यसत्कम्? इति प्रश्नोऽत्रोत्तरम्—जम्बूद्वीपप्रज्ञप्तौ जीवाभिगमे च जगतीवर्णनाधिकारे व्यन्तरदेवदेवीनां यत् 'पुरा पुराणाणं सुचिण्णाणं' इत्यादिना प्राक्तनसुकृतप्रशंसनं तदाराधकसम्यग्दृष्ट्यादिव्यतिरिक्तानामेवावसीयते ॥६-२६॥

## अथ पण्डितश्रीजगमालगणिकृत-
## प्रश्नास्तत्प्रतिवचांसि च यथा-

सन्ध्याप्रतिलेखनादेशमार्गणसमये मुनयो मिलन्ति सा सतानां मध्ये का मण्डली ? इति प्रश्नोऽत्रोत्तरम्-सन्ध्यायां प्रतिलेखनादेशमार्गणनिमित्तं यन्मुनयो मिलन्ति तदावश्यकमण्डलीमध्येऽन्तर्भवतीति संभाव्यते ॥१-२७॥

तथा—सद्दालपुत्रकुम्भकारकृतं प्रतिक्रमणसूत्रमिति प्रघोषः सत्यो न वा ? कस्य कृतिर्वा सा ? इति प्रश्नोऽत्रोत्तरम्-श्राद्धप्रतिक्रमणसूत्रमार्षमिति पश्चाशकवृत्तौ प्रोक्तमस्ति कुम्भकारकृतमिति प्रघोषस्तु तथ्येतर इति ज्ञायते ॥२-२८॥

तथा—षष्ठकर्मग्रन्थकर्त्री चन्द्रमहत्तरा साध्वीति सत्यं न वा ? इति प्रश्नोऽत्रोत्तरम्-षष्ठकर्मग्रन्थकर्त्री चन्द्रमहत्तरा साध्वीति प्रघोषो मिथ्येति प्रतिभाति, यतस्तट्टीकायाम् 'आचार्य आह' इत्युक्तमस्ति। तथैव तद्चूर्णौ चन्द्रमहत्तरत्वं प्रकरण व्याख्यायत इति ॥३-२९॥

तथा—चतुःशरणप्रभृतीनां कियतां प्रकीर्णकानां पठने श्राद्धोऽधिकारी ? इति प्रश्नोऽत्रोत्तरम्-परम्परया भक्तपरिज्ञा १ चतुःशरण २ आतुरप्रत्याख्यान ३ संस्तारक ४ प्रकीर्णकानामध्ययने श्राद्धानामधिकारित्वमवसीयते ॥४-३०॥

तथा—श्वेतदशमीदिनाचामाम्लविधायकानां काचिन्मिथ्यामतिर्न वा ? इति प्रश्नोऽत्रोत्तरम्-दशमीदिनाचामाम्लविधायिनां मिथ्यामतिर्ज्ञाना नास्ति ॥५-३१॥

तथा—रोहिणीदिनाराधकानां तथैव? इति प्रश्नोऽत्रोत्तरम्–रोहिणीदिनाराधकानां तथैव ॥६–३२॥

तथा—पर्युषणोपवासः पञ्चमीमध्ये गण्यते न वा? इति प्रश्नोऽत्रोत्तरम्–पर्युषणोपवासः षष्ठकरणसामर्थ्याभावे पञ्चमीमध्ये गण्यते, नान्यथेति । ७–३३॥

तथा—[1]काकुत्स्थ इति रामनाम तद्वंशनाम वा? कथं च व्युत्पत्तिः? इति प्रश्नोऽत्रोत्तरम्–'कु' इत्यत्र "अव्ययस्य को द् च" (सिद्धहेम० ।७।३।३१) इति अकि [2]ककुद्, कुत्सितं तिष्ठन्ति विपक्षा अस्मिन्निति "स्थादिभ्यः कः" (सिद्धहेम० ५।३।८२) इति 'के' [3]ककुत्स्थस्तस्यापत्यं [4]काकुत्स्थो राम इति, व्युत्पत्त्यनुसारेण रामवंशस्यादिपुरुषस्याभिधानं [5]ककुत्स्थ इति ॥८–३४॥

तथा—अर्थमण्डलीति कोऽर्थः? इति प्रश्नोऽत्रोत्तरम्–प्रभाते व्याख्यानं रात्रावर्थपौरुषी चेति अर्थमण्डलीति ॥९–३५॥

तथा—"आवस्सियाए जस्स जोगो सिज्झातर" इत्यत्र योगशब्देन किमुच्यते? इति प्रश्नोऽत्रोत्तरम्–यस्य योगो भिक्षार्थं गच्छन्निदं वक्ति–'यस्य योगो येन वस्तुना सह सम्बन्धो भविष्यति तद्ग्रहीष्यामि' इत्यर्थः, इत्योघनिर्युक्तिवृत्तौ ॥१०–३६॥

---

१ काउस्थ इत्यन्यत्र । २ ककु इति पाठः । ३ ककुस्थ इति पाठान्तरम् । ४ काकुस्थ इत्यपि पाठः । ५ ककुस्थ इति प्रत्यन्तरे ।

तथा—अष्टापदगिरौ स्वकीयलब्ध्या ये जिनप्रतिमा वन्दन्ते ते तद्भवसिद्धिगामिन इत्यक्षराणि सन्ति, तथा च सति, ये विद्याधरयमिनस्तथा राक्षसवानरचारणभेदभिन्ना अनेके ये तपस्विनस्तत्र गन्तुं शक्तास्तेषां सर्वेषामपि तद्भवसिद्धिगामित्वमापद्यते, ततः सा का लब्धिर्यया तत्र गमने गौतमादिवत्तद्भवसिद्धिगामिनो भवन्ति ? इति प्रश्नोऽत्रोत्तरम्—अष्टापदगिरौ ये तपःसंयमोत्थलब्ध्या यात्रां कुर्वन्ति, ते तद्भवसिद्धिगामिन इति संभाव्यते व्यक्ताक्षरानुपलम्भात् ।११-३७।

तथा—दिगाचार्या इति कोऽर्थः ? इति प्रश्नोऽत्रोत्तरम्—ते दिगाचार्या ये गुर्वादिष्टदिग्वर्त्तिसाधूनां सारणादिकर्तार इति सचित्ताचित्तमिश्रवस्त्वनुज्ञापी दिगाचार्य इति, योगशास्त्रे चतुर्थप्रकाशे " प्रायश्चित्त वैयावृत्त्यम् " इत्यादिश्लोकवृत्तौ ॥१२-३८॥

तथा—आर्यसुहस्ति-आर्यमहागिरिनामानौ श्रीधर्मसागरोपाध्यायकृतपट्टावल्यादौ सहोदरावुक्तौ कल्पसूत्रस्थविरावल्यां च भिन्नगोत्रौ तत्र को हेतुः ? इति प्रश्नोऽत्रोत्तरम्—आर्यसुहस्ति-आर्यमहागिर्योः सहोदरत्वेऽपि भिन्नगोत्रत्वं न विरुध्यते, मण्डिकपुत्र-मौर्यपुत्राभिधगणधरयोरपि तथैव श्रवणात् ॥१३-३९॥

## अथ पण्डितश्रीकल्याणकुशलगणिकृत-प्रश्नास्तत्प्रतिवचांसि च यथा—

"इमं च णं केवलकप्पं जम्बूदीवं दीवं विउलेण ओहिणा आभोएमाणे आभोएमाणे पासति" इत्यत्र चतुष्पल्यायुषः सूर्याभस्य कथं जम्बूद्वीपावधिकमवधिज्ञानं संभवति ? "ऊणद-

सागरे संखजोअणा तप्परमसंखा" इति वचनादिति प्रश्नोऽत्रो-त्तरम्—"उणद्धसागरे" इतिगाथावृत्तौ भवनपतिव्यन्तरज्योति-ष्कदेवानामेवावधिक्षेत्रं व्याख्यातमस्ति, वैमानिकदेवानां तु क्षेत्रस्य "दीवदमकप्प पढमं" इत्यादिनाभिहितत्वादिति न काचिद्विप्रतिपत्तिः ॥१-४०॥

तथा—पूर्णिमास्तिस्त्र एव पर्वत्वेन संगीयन्ते सर्वा अपि वा पर्वतयाऽङ्गीकार्याः ? इति श्राद्धा भूयो भूयः पृच्छन्ति इति प्रश्नोऽत्रोत्तरम्—"छण्हं तिहीण मज्झम्मि का तिही अज्जवासरे" इत्याद्यागमानुसारेणाविच्छिन्नवृद्धपरंपरया च सर्वा अपि पूर्णिमाः पर्वत्वेन मान्या एवेति ॥२-४१॥

तथा—(अ)आणाखंडणकारी, तह वि तिकालं महाविभू-ईए। पूएइ वीयरायं, सव्वं वि निरत्थयं तस्स ॥१॥ आणाइ तवो आणाइ संजमो तह य दाणमाणाए। आणारहिओ धम्मो, पलालपूलु व्व पडिहाइ ॥२॥ फलं नग्घइ सोलसिं० इत्यादि-वचनालम्बनेन साङ्ख्यादिदर्शनान्तरेषु यद्बालतपःकष्टानुष्ठानं समाचरन्ति तत्सर्वं सर्वथा निष्फलमेव न काऽपि कर्मनि-र्जरेति केषाञ्चित्संमतम्,

(आ) केषाञ्चित्तु तेषामपि तारतम्येन स्वल्पमपि फलं स्वीकार्यं न तु निष्फलता। अत्रागमः—" जं अन्नाणी क-म्मं, खवेइ बहुयाहि वासकोडीहिं। तं नाणी तिहिं गुत्तो, खवेइ ऊसासमित्तेण ॥१॥ फलं नग्घइ सोलसिं० पलालपूलु व्व " इत्यादावपीदमेव तात्पर्यम्। "अविरयमाइ सुराउं बालतवोऽकामनिज्जरो जयइ"त्ति। "सरागसंजमेणं बालतवेणं" ति "चरगपरिव्वाय बंभलोगो जा" इत्यपि। अत एव बाल-तपस्विनामपि कोडिन्नदिन्नसेवालिनाम्नां स्वीयस्वीयतपोऽनु-

सारेणैव सोपानप्राप्तिः। सर्वथा विफलतायां तु सर्वेषामप्राप्तिः प्रसज्यते। कथं च कर्म्मलाघवमन्तरेण मिथ्यात्विन एव ग्रन्थिदेशं यावदागच्छन्ति?। न चाकामनिर्जरामात्रमेव तत्र हेतुः, कारणान्तराणामपि विवाघप्रज्ञप्तिवृत्त्याद्युक्तत्वात्, तथाहि—"अणुकंपकामनिज्जरवालतवे दाणविणयविन्भंगे। संजोगविप्पओगे, वसणूसवइड्ढिसक्कारे ॥१॥" दृश्यते चैतदर्थसंवादः साक्षादेव महानिशीथे नागिलाधिकारे, तद्यथा—"अकामनिज्जराए वि किंचि कम्मक्खयं भवइ, किं पुण जं वालतवेणं?" एवं सति "निरत्थयं तस्स" इत्यादीनां का गतिरिति चेत्? सत्यम्–सर्व्वाणि चैतान्युत्सर्गसूत्राणि, ततोऽत्र 'उत्सर्गादपवादो वलीयान्' अयमेव न्यायोऽनुसर्त्तव्यस्ततः सिद्धं तेषामपि तारतम्येन किञ्चित्किञ्चित् फलमिति समादधत इति॥

( इ ) तथा केचिन्महानिशीथगत (जे यावि निण्हगाणं अणुकूलं भासिज्जा इत्यादि) प्रसिद्धालापकमुपष्टभ्य वक्तारो भवन्ति, तथाहि–ये पक्षान्तरीयविहितं पतज्जिनप्रासादादिपरित्राणमाचार्योपाध्यायादीनामापन्निवारणं साधुमुद्दिश्य दानसत्कारादिकं चानुमन्यन्ते तेषां महत्पातकं जायते, सम्यक्त्वमपि प्रतिहन्यते, तेन मतान्तरीयकृतं युगप्रधानाचार्यभक्त्यादिकमपि सर्वथा नानुमोदनीयमेवेति।

( ई ) केचित्तु तानपि प्रतिवदन्ति–यथा नयसारश्रेष्ठिसङ्गमादीनां मिथ्यात्वभाजामपि दानं बहुषु ग्रन्थेषु परम्परायां चानुमोद्यमानं दृश्यते, तथा सर्वतीर्थकृत्सातिशयसाधुपारणासु पञ्चदिव्यावसरे 'अहो! दानमहो! दानम्' इत्युद्घोषोऽपि यदनुमोदनीयं न तत्कार्यते कथं? दृश्यन्ते च भवदादयः सर्वेऽपि मार्गप्रतिपन्नाः कारयन्तः,

-यथा—"देहि भो ! किञ्चिदस्मभ्यं तव भूयान् लाभो भावी" इति। यदि च प्रदत्ते तदा सन्तुष्टिरपि जायत इति स्वयमनुभूयमानस्यार्थस्य विलोपः कर्तुं सतां नोचित इत्याशयतैव सूत्रकारेणाभ्यधायि-"अहवा सव्वं चिय वीयराय" इत्यादि। अत्र सम्यग्दृष्टिपर्यन्तानां पूर्वमुक्तत्वान्मिथ्यात्विनामपि किञ्चित्करणीयमनुमोदनीयमित्यापतितम्, तच्च विचार्यमाणं जिनजिनविम्बजिनालयाचार्योपाध्यायसाधुश्राद्धादीनां वास्तवाराध्यानामशनपानप्रदानादिभक्तिवर्णनसंज्वलनापत्परित्राणादिकं, दृश्यते चानुमोदितं साक्षादप्याचाराङ्गादौ साधुना सारिशकटी पुरस्करणे "मम न कल्पते, भवता पुनः पुण्यप्राग्भारार्जनमकारि" इत्यादि। कथं च जिनशासनप्रभावनाकारिणो म्लेच्छा अप्यनुमोद्यन्त ? इत्याद्यनाग्रहबुद्ध्या पर्यालोचनीयम्। इति प्रश्नावत्रोत्तरे–तृतीयचतुर्थप्रश्नप्रतिवचनं तु द्वादशजलपपट्टकादवसेयम्। किञ्च "सव्वं पि निरत्थयं तस्स" इत्यादिवचनस्याऽऽपेक्षिकत्वान्नैकान्तवादः। अपेक्षा च मोक्षफलाभावलक्षणेतिभावः। अन्यच्च महानिशीथप्रसिद्धालापकमुपदर्श्यैकान्तेन परपाक्षिकप्रशंसानिषेधः सोऽपि न सङ्गच्छते, यतस्तस्मिन्नेवालापके 'अहिमुहमुद्धपरिसामज्झगय(म)सलाहेज्जा' इतिवचनेनाभिमुखमुग्धपर्षद्विशेषमध्य एव तच्छ्लाघाया निषेधः प्रतिपादितोऽस्ति न तु सामान्यपर्षदीति। किञ्चात्रार्थे ऊहप्रत्यूहादि बहुवक्तव्यमस्ति तत्तु साक्षान्मिलन एव समीचीनतामञ्चतीति ॥३-४-४२-४३॥

तथा—दाघज्वरी कश्चिदनशनं कृत्वा रजन्यामपि जलपानं विधत्ते ? यद्वा तद्भियाऽनशनमेव न करोति ?·किं वाऽनशनी श्राद्धो दिवापि सचित्तमचित्तं वा जलं पिबति ? इति प्रश्नो-

ऽत्रोत्तरम्—रात्रौ सर्वथा जलत्यागाशक्तेन तेनाहारत्यागरूपम नशनं तु विधेयमेवेति ज्ञातमस्ति। तथानशनिना श्राद्धेनाचित्तमेव जलं पेयं तदप्युष्णमेवेति ॥५-४४॥

तथा—कस्यचिन्म्रियमाणस्य पक्षान्तरीयस्य कश्चित्साधुः श्राद्धो वा नमस्कारादिकं श्रावयति तस्य कियान् लाभो भवति ? पातकं वा भवति ? सम्यक्त्वं वा प्रतिहन्यते ? इति प्रश्नोत्रोऽत्तरम्—उपकारबुद्ध्या श्रावयतो लाभ एव ज्ञातो ऽस्ति ॥६-४५॥

तथा—श्रीहरिभद्रसूरिणा सौगता हुता एव ? होतुमारभ्य मुक्ता वा ? कुत्र चाय संबन्धो वर्तते ? इति प्रश्नोऽत्रोत्तरम्—श्रीहरिभद्रसूरिभिः सौगता होतुं खे आकृष्टा, तदनु गुरुभिर्ज्ञातम्, साधू प्रहितौ। ताभ्याम्—"गुणसेणि(ण)अग्गिसम्मा सीहाणंदा य"-इत्यादि समरादित्यचरित्रकथनमूलगाथात्रयं दत्तम्। ततः प्रबुद्धेन सूरिणा ते मुक्ता इति तत्प्रबन्धे। प्रभावकचरित्रे तु पणपूर्वकं वादे जितं सौगतगुरु स्वयमेव तप्तकटाहतैले प्राविशदिति। तथा तत्रैव—"इह किल कथयन्ति केचिदित्थं गुरुतरमन्त्रजपप्रभावतोऽत्र। सुगतमतबुधान् विहृप्य तप्ते ननु हरिभद्रगुरुर्जुहाव तैले ॥१॥ इत्यपि लिखितमस्तीति ॥७-४६॥

॥ इति सकलसूरिपुरन्दरपरमगुरुश्रीतपागच्छाधिराजभट्टारकश्री ५ श्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्यपण्डितकीर्तिविजयगणिसमुचिते प्रथम प्रकाश ॥

# अथ द्वितीयः प्रकाशः ।

## अथ पण्डितनगर्षिगणिकृत–
## प्रश्नास्तत्प्रतिवचांसि च यथा—

जिनालये गृहस्थानां केसरादिच्छण्टनमुचितं न वा? इति प्रश्नोऽत्रोत्तरम्–जिनालये श्राद्धानां केसरादिच्छण्टनमुचितमेव ज्ञायते तिलकादिवत् ॥१-४७॥

तथा—पर्युषितौदनो द्वितीयदिनसन्ध्यायां तद्दिनतक्रादिना संस्कृतस्तृतीयदिने कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्–पर्युषितौदनस्तक्रादिसंस्कारे सति तृतीयदिनेऽपि कल्पते ॥२-४८॥

तथा—जिनप्रासादान्निर्गच्छतां साधूनां श्राद्धानां च "आवस्सही"करणमुचितमनुचितं वा? इति प्रश्नोऽत्रोत्तरम्–जिनालयान्निर्गमने साधूनां सदैव श्राद्धानां तु सामायिकपौषधसद्भावे "आवस्सही"करणमुचितमिति बोध्यम् ॥३-४९॥

तथा—चतुर्मासकान्तः प्रासादे देववन्दनं काजकोद्धरणं विना यौक्तिकमयौक्तिकं वा? इति प्रश्नोऽत्रोत्तरम्–चतुर्मासकमध्ये जिनालये देववन्दनं साधूनां श्राद्धानां च काजकोद्धरणपूर्वकमेव युक्तिमत् ॥४-५०॥

तथा—जिनगृहे निशायां नाट्यादिकं विधेयं न वा? इति प्रश्नोऽत्रोत्तरम्–जिनगृहे रात्रौ नाट्यादिविधेर्निषेधो ज्ञायते यत उक्तम्—"रात्रौ न नन्दिर्न बलिः प्रतिष्ठा न मज्जनं न भ्रमणं रथस्य । न स्त्रीप्रवेशो न च लास्यलीला साधुप्रवेशो

न तदत्र चैत्यम् ॥१॥" किञ्च क्वापि तीर्थादौ तत् (यत्) क्रियमाणं दृश्यते तत्तु कारणिकमिति बोध्यम् ॥५-५१॥

तथा—क्षणावसरे 'वइसणइं ठाउं' इति कुर्वतां गमनं कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्—क्षणावसरे 'वइसणइं ठाउं' इति मुख्यवृत्त्या तैरेव वक्तव्यं ये व्याख्यानं यावत् स्थातुकामा नान्यैरिति ॥६-५२॥

तथा—सामान्यदिगम्बरगृहस्थानां गृहे रत्नत्रयादिमहोत्सवावसरे आत्मीयश्रेष्ठिप्रभृतिश्राद्धानामदनार्थं गमनमुचितमनुचितं वा? इति प्रश्नोऽत्रोत्तरम्—यथा विरोधवृद्धिर्न भवति तथा विधेयमिति तत्वं न त्वेकान्तवादः ॥७-५३॥

तथा—पक्वाम्लिका शुष्के आर्द्रे वा समायाति? इति प्रश्नोऽत्रोत्तरम्—पक्वाम्लिका शुष्का ज्ञेया नत्वार्द्रा ॥८-५४॥

## अथ पण्डितरविसागरगणिकृत-प्रश्नास्तत्प्रतिवचांसि च यथा—

प्रथमान्तिमयोस्तीर्थकरयोः शरीरमाने भिन्नत्वं बले भिन्नत्व नास्ति तत्कथम्? इति प्रश्नोऽत्रोत्तरम्—प्रथमान्तिमजिनयोः शरीरमानभेदेऽपि न बले भेदः, "अपरिमियबला जिणवरिंदा" इत्यागमप्रामाण्यादविशेषेणानन्तबलवत्त्वमवसीयते ॥१-५५॥

तथा—साधुना विधिना क्रियमाणेऽपि कृत्ये प्रायश्चित्तोत्पत्तिः प्रतिपादिताऽस्ति तत् सत्यमसत्यं वा? इति प्रश्नोऽत्रोत्तरम्—साधुना विधिना विधीयमानेऽपि कृत्ये प्रायश्चित्तप्रदान सत्यमेव, आगमे तथाभिधानाद्, विधिना हस्तशतात्परतो गमने ईर्यापथिकीप्रतिक्रमणवत् ॥२-५६॥

तथा—अस्वाध्यायदिनत्रयान्तः कृत उपवास आलोचनातपस्येति न वा? इति प्रश्नोऽत्रोत्तरम्–अस्वाध्यायदिनत्रयसत्कं तप आलोचनातपसि नायाति ॥३-५७॥ ( ऋतुमतीं स्त्रियमधिकृत्यैतत् प्रश्नोत्तरम् )

तथा—दिनादिपौरुष्यनन्तरं दशवैकालिकादिसूत्रगणनं शुध्यति न वा? इति प्रश्नोऽत्रोत्तरम्–अहोरात्रमध्ये सन्ध्याचतुष्टयं विहाय सर्वत्र दशवैकालिकादिगणनं शुध्यतीति बोध्यम् ॥४-५८॥

तथा—भगवतीपञ्चमशतके चत्वारि प्रमाणान्युक्तानि, रत्नाकरावतारिकायां तु द्वे कथम्? इति प्रश्नोऽत्रोत्तरम्–भगवतीपञ्चमशतके चत्वारि प्रमाणान्युक्तानि, रत्नाकरावतारिकायां च परोक्षप्रमाणेऽनुमानोपमानाऽऽगमलक्षणप्रमाणत्रयस्यान्तर्भावविवक्षया प्रमाणद्वयमुक्तमस्तीति बोध्यम् ॥५-५९॥

तथा—भगवतीनवमशतकोक्तोऽश्रुत्वाकेवली धर्मोपदेशं दत्ते न वा? इति प्रश्नोऽत्रोत्तरम्–अत्रैकं ज्ञातमेकं प्रश्नं च मुक्त्वा धर्मोपदेशं न दत्ते इति तत्रैवोक्तमस्तीति ॥६-६०॥

## अथ पण्डितविवेकहर्षगणिकृत– प्रश्नास्तत्प्रतिवचांसि च यथा—

स्थानाङ्गे चतुर्थस्थानेऽन्तक्रियाधिकारे "दीहेणं परिआएणं" इत्येवोभयत्र पाठः सूत्रे, वृत्तौ च सनत्कुमारान्तक्रियायां दीर्घतरेणेति व्याख्यातं तथैव च सङ्गतिः, अन्यथा सनत्कुमारचक्रिणस्तद्भवमुक्तताऽऽपद्येत, तेन सूत्रे तरशब्दः किमिति नोक्तः? इति प्रश्नोऽत्रोत्तरम्–स्थानाङ्गे चतुर्थस्थानेऽन्तक्रियाधिकारे दीर्घतरेणेति व्याख्यातम्, भरतान्तक्रिया-

तथा—षट् छेदग्रन्थाः के? इति प्रश्नोऽत्रोत्तरम्—निशीथम् १ महानिशीथम् २ दशाश्रुतस्कन्धः ३ बृहत्कल्पः ४ व्यवहारः ५ पञ्चकल्पः ६ चेति षट् छेदग्रन्थाः ॥३-६८॥

## अथ पण्डितजिनानन्दगणिकृतप्रश्नौ तत्प्रतिवचसि च यथा—

श्राद्धानामष्टमान्तप्रत्याख्यानेऽयथावर्णं कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्—श्राद्धानामष्टमान्ततपस्ययथावर्णं न कल्पते, आचरणाया अभावादिति ॥१-६९॥

तथा—तद्दिनकृतगुडपर्पटिका कस्यां विकृतौ समायाति? इति प्रश्नोऽत्रोत्तरम्—तद्दिनकृतगुडपर्पटिका घृतगुडरूपविकृतितया व्यवह्रियते इति वृद्धवादः ॥२-७०॥

## अथ पण्डितयशोविजयगणिकृत-प्रश्नौ तत्प्रतिवचसी च यथा—

गृहस्थाचारधरो यतिवेषवान् प्रतिक्रमणं कर्तुकामः किं सामायिकग्रहणपूर्वकं करोत्यथवा चैत्यवन्दनतः? इति प्रश्नोऽत्रोत्तरम्—गृहस्थाचारधरो यतिवेषवान् मुख्यवृत्त्या सामायिकग्रहणं कृत्वा प्रतिक्रमणं करोति ॥१-७१॥

तथा—शीतोष्णकालयोर्गृहस्थानां जिनालये देववन्दनं काजोद्धरणपूर्वकं किं वा प्रमार्जनेन? इति प्रश्नोऽत्रोत्तरम्—शीतोष्णकालयोर्गृहस्थानां जिनालये देववन्दननिमित्तं काजोद्धरणस्य नियमो नास्ति तेन यदि कश्चित्करोति तदा करोतु ॥२-७२॥

## अथ पुनः पण्डितनगर्षिगणिकृत-
## प्रश्नास्तत्प्रतिवचांसि च यथा—

"सत्तट्ठगुरुपरंपरकुसीले  एगवितिगुरुपरंपरकुसीले य" इतिश्रीमहानिशीथतृतीयाध्ययनप्रारम्भप्रस्तावेऽस्य कोऽर्थः ? इति प्रश्नोऽत्रोत्तरम्—"सत्तट्ठगुरुपरंपरकुसीले एगवित्तिगुरुपरम्परकुसीले य" इत्यत्र विकल्पद्वयप्रतिपादनादेवमवसीयते यदेकद्वित्रिगुरुपरम्परां यावत्कुशीलत्वेऽपि तत्र साधुसामाचारी सर्वथोच्छिन्ना न भवति तेन यदि कश्चित्क्रियोद्धारं करोति तदान्यसाम्भोगिकादिभ्यश्चारित्रोपसम्पद्ग्रहणं विनाऽपि सरति। चतुरादिगुरुपरम्पराकुशीलत्वे तु साम्भोगिकादिभ्यश्चारित्रोपसम्पदं गृहीत्वैव क्रियोद्धारं करोति नान्यथेति ॥१-७३॥

तथा—महाविदेहविजयेषु विचरत्सु केवलिजिनेष्वन्यजिनानां जन्मादि स्यात् ? किं वा तन्मोक्षगमनानन्तरम् ? इति प्रश्नोऽत्रोत्तरम्—महाविदेहविजयेषु विचरत्सु केवलिषु जिनेषु छद्मस्थेषु वाऽन्येषां जिनानां जन्मादि न स्यादिति ॥२-७४॥

तथा—चतुर्मासकमध्ये नगरग्रामादिमध्यावस्थाने क्षणावसरे योजनमितक्षेत्रे पुष्पप्रकरो देवैः क्रियते न वा ? अष्टप्रातिहार्याणां नैयत्येनोक्तत्वात्, चेत् क्रियते तदा लोकगृहादौ कथम् ? इति प्रश्नोऽत्रोत्तरम्—चतुर्मासकमध्ये तीर्थङ्कराणां नगरादाववस्थानं प्रायो न भवति, यदि कदाचिद्भवेत्तदा यथौचित्येनैव पुष्पप्रकरादि क्रियमाणमेव संभाव्यतेऽन्यथा प्रातिहार्यनैयत्यं न स्यादिति ॥३-७५॥

तथा—चतुर्मासकमध्ये समवसरणं स्यान्न वा ? तथा द्वादश पर्षदो नगरमध्ये कथं मान्ति ? इतिप्रश्नोऽत्रोत्तरम्—

चतुर्मासकमध्ये समवसरणमपि न नियतम्, कदाचिद्भवति कदाचिन्न भवत्यपि। पर्षदस्तु द्वादशापि नियता एव तेन नगरमध्येऽपि सुखेन मान्तीति प्रतिभाति ॥४-७६॥

तथा—गर्गाचार्यत्यक्तपञ्चशतसाधूनां साधुत्वं सम्भाव्यते न वा, स्वेच्छाचारित्वात्? इति प्रश्नोऽत्रोत्तरम्–गर्गाचार्यत्यक्तशिष्याणां व्यवहारतः साधुत्वेऽपि परमार्थतः साधुत्वाभाव एव सम्भाव्यते ॥५-७७॥

तथा—ग्रामनगरदेशादिस्थापना भरतेन कृता, "बहलीअडम्बइल्ला" इत्यादिषु छद्मस्थो भगवान् विहृतवानिति तदा कथं देशाभिधानं कथितम्? इति प्रश्नोऽत्रोत्तरम्–"बहलीअडम्बइल्ला" इत्यादिषु छद्मस्थो भगवान् विहृतवान् इत्यत्र भगवता स्वसुतानां राज्यप्रदानावसरे देशादिनामस्थापनायाः कृतत्वान्न काऽप्याशङ्केति ॥६-७८॥

## अथ पण्डितडाहर्षिगणिकृत–
## प्रश्नस्तत्प्रतिवचश्च यथा–

दत्तेऽसौ सर्वसौख्यानि त्रिशुद्धयाऽऽराधितो यतिः। विराधितश्च [1]तैरश्चनरकानल्पयातनाः ॥९०॥ चारित्रिणो महासत्त्वा यतिनः सन्तु दूरतः। निष्क्रियोऽप्यगुणोऽपि न विराध्यो मुनिः क्वचित् ॥९१॥ यादृशं तादृशं वापि दृष्ट्वा वेषधरं मुनिम्। गृही गौतमवद्भक्त्या पूजयेत् पुण्यकाम्यया ॥९२॥ वन्दनीयो मुनेर्वेषो न शरीरं हि कस्यचित्। यतिवेषं ततो दृष्ट्वा पूजयेत् सुकृती जनः ॥९३॥ पूजितो निष्क्रियोऽपि स्याल्लज्जया व्रतधारकः। अवज्ञातः सत्क्रियोऽपि व्रते स्याच्छिथिलादरः ॥९४॥ दानं दया क्षमा शक्तिः सर्वमेवाल्पसिद्धि-

1 तैरश्च इति पाठः प्रत्यन्तरे ।

कृत्। तेषां ये प्रतिमं दृष्ट्वा न नमस्यन्ति मानवाः ॥९५॥ आराधनीयास्तदमी विशुद्ध्या जैनलिङ्गिनः। न कार्या सर्वथा तेषां निन्दा स्वार्थविघातिका ॥९६॥ कारणं तव कुष्ठानां, महीपाल! स्फुटं ह्यदः। मा कदापि मुनीन् क्रुद्धानपि त्वं तु विराधयेः ॥९७॥ इति श्रीवृद्धशत्रुञ्जयमाहात्म्यद्वितीयसर्गमध्यगतश्लोकास्तेषां मध्ये केवललिङ्गमात्रधरोऽपि मुमुक्षुर्वन्दनीयो गौतमवत् पूजनीयश्च तत्कथं, केन हेतुना? इति प्रश्नोऽत्रोत्तरम्—'दत्तेऽसौ सर्वसौख्यानि' इत्यादिशत्रुञ्जयमाहात्म्यद्वितीयसर्गमध्यगतश्लोकास्तु कारणिकविधिमाश्रित्य तीर्थोद्भावनबुद्ध्या वा कृताः सम्भाव्यन्ते इति न कश्चिद्दोष इति ॥१-७९॥

## अथ वटपल्लीयपण्डितपद्मविजयगणिकृत-प्रश्नास्तत्प्रतिवचांसि च यथा—

पाक्षिकादिप्रतिक्रमणमध्ये चैत्यवन्दनादारभ्य किं सूत्रं यावत्पञ्चेन्द्रियच्छिन्दनं निवार्यते? इति प्रश्नोऽत्रोत्तरम्—पाक्षिकादिप्रतिक्रमणमध्ये चैत्यवन्दनादारभ्य "[1]इच्छामो अणुसट्ठिं" यावत् पञ्चेन्द्रियच्छिन्दनं निवार्यमाणं परम्परया दृश्यते परं व्यक्ताक्षराणि नोपलभ्यन्ते ॥१-८०॥

तथा—पाक्षिकादिप्रतिक्रमणे क्रियमाणे छिक्कासद्भावे कुतः स्थानात्किं स्थानं यावत् पुनः प्रतिक्रमणं क्रियते? इति प्रश्नोऽत्रोत्तरम्—पाक्षिकप्रतिक्रमणे पाक्षिकातिचारालोचनादर्वाग् यदि छिक्का जायते तदा तत्यवसरे चैत्यवन्दनादि पुनः कर्तव्यमिति वृद्धसम्प्रदायः ॥२-८१॥

---

१ अन्तिमस्वाध्यायं यावदित्यपि पाठः प्रत्यन्तरे।

तथा—वन्दनकावसरे [1]गुरोः पादचिन्तनं क्व विधेयम्? इति प्रश्नोऽत्रोत्तरम्—वन्दनकावसरे मुखवस्त्रिकायां रजोहरणे वा यत्र वन्दनकं ददाति तत्र गुरुपादौ चिन्तयति ॥३-८२॥

तथा—"सत्तविराहणपावं असंखगुणियं तु इक्कभूयस्स। भूयस्स य संखगुण पावं इकस्स पाणस्स ॥१॥ बेइंदिय तेइंदिय चउरिंदिय चेव तह य पंचिंदी। लक्खसहस्सं तह सयगुणं च पाव मुणेयव्वं ॥२॥" इति गाथाद्वयं कस्मिन् ग्रन्थे विद्यते? इति प्रश्नोऽत्रोत्तरम्—"सत्तविराहणपाव" इत्यादि गाथाद्वयं छूटकपत्रेषु लिखितं दृश्यते परं न क्वापि ग्रन्थे ॥४-८३॥

तथा—वन्दनकावसरे मुखवस्त्रिका कुत्र मुच्यते? इति प्रश्नोऽत्रोत्तरम्—वन्दनकावसरे मुखवस्त्रिका साधुभिर्वामजानुनि मुच्यते। श्रावकैस्तु गुरुपादयोर्वन्दनदानावसरे जानुनि, अन्यथा तु भूमौ रजोहरणे वेति ॥५-८४॥

तथा—गुरुसंनिधौ पाश्चात्यप्रतिलेखनाक्रियां कुर्वाणाः श्राद्धयः स्वाध्यायमुपविश्य कुर्वन्ति ऊर्ध्वस्था वा? इति प्रश्नोऽत्रोत्तरम्—गुरुसंनिधौ पाश्चात्यप्रतिलेखनाक्रियां कुर्वाणाः श्राद्धयः ऊर्ध्वस्थाः स्वाध्यायं विदधति ॥६-८५॥

## अथ पण्डितकान्हर्षिगणिकृतप्रश्ना-स्तत्प्रतिवचांसि च यथा—

श्राद्धानां रात्रौ जिनालये आरात्रिकोत्तारणं युक्तं न वा? इति प्रश्नोऽत्रोत्तरम्—श्राद्धानां जिनालये रात्रावारात्रिकोत्तारणं कारणे सति युक्तिमत् नान्यथा ॥१-८६॥

[1] गुरुपादेति पाठः प्र.।

तथा—कायोत्सर्गस्थितजिनप्रतिमानां चरणादिपरिधापनं युक्तं न वा ? इति प्रश्नोऽत्रोत्तरम्–जिनप्रतिमानां चरणादिपरिधापनं तु साम्प्रतीनव्यवहारेण न युक्तियुक्तं प्रतिभाति ॥२-८७॥

तथा—पाक्षिकप्रतिक्रमणे सम्बुद्धक्षामणादौ कृते "इच्छकारि सुह पाखी सुख तप सरीर निराबाध सुख संयमयात्रा निरवहइ छि" इत्यादि वचनं कथनीयं न वा ? इतिप्रश्नोऽत्रोत्तरम्–पाक्षिकप्रतिक्रमणे सम्बुद्धक्षामणादौ कृते "इच्छकारि सुह पाखी" इत्यादि पठनमधिकं संभाव्यते सामाचार्यादावदर्शनात् ॥३-८८॥

## अथ पण्डितवानरगणिशिष्य–पण्डितआणन्दविजयगणिकृतप्रश्नौ तत्प्रतिवचसी च यथा—

करम्बके तक्रे वा प्रक्षिप्तं सचित्तं जीरकमचित्तीभवति न वा ? यदि वाऽचित्तीभवति तर्हि घटिकाद्वयाद्वा प्रहरत्रयाद्वा रात्र्यतिक्रमाद्वा भवति ? इति प्रश्नोऽत्रोत्तरम्–करम्बकादौ क्षिप्तं सचित्तजीरकं प्रासुकं न भवतीति ज्ञातमस्ति ॥१-८९॥

तथा—इक्षुखण्डानि छिन्नपर्वाणि सचित्तान्यचित्तानि वा ? घटिकाद्वयात्सचित्तपरिहारिगृहस्थस्याऽत्तुं कल्पन्ते न वा ? इति प्रश्नोऽत्रोत्तरम्–इक्षुखण्डानि छिन्नपर्वाण्यपि सचित्तानीति ज्ञायन्ते ॥२-९०॥

## अथ पण्डितकाह्नजीगणिकृतप्रश्नौ तत्प्रतिवचसी च यथा–

कश्चित्प्रातः सामायिकं गृहीत्वा घटिकामध्ये पौषध गृह्णाति तस्य कल्पते न वा ? इति प्रश्नोऽत्रोत्तरम्–सामायिकं

कृत्वाऽपूरितेऽपि सामायिके यदि कश्चित्पौषधं गृह्णाति तदा कल्पते ॥१-९१॥

तथा—मालवीऋष्यादीनां स्वाध्यायो मण्डल्यां कल्पते न वा ? इति प्रश्नोऽत्रोत्तरम्—आगमोक्तयतीनां साम्प्रतीनाचार्याणां भट्टारकाणां च स्वाध्यायो मण्डल्यां कल्पते न त्वन्येषां वार्त्तमानिकोपाध्यायादीनामिति वृद्धवादः ॥२-९२॥

## अथोपाध्यायश्रीसुमतिविजयगणिशिष्य-पण्डितगुणविजयगणिकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

यदि केनाप्यनुपयोगादिना साधुना सचित्तं लवणं गृहीतं पश्चात् ज्ञातं तत्र को विधिः ? इति प्रश्नोऽत्रोत्तरम्—अत्र साधुस्तल्लवणधनिकस्य निवेदयति—आयुष्मन् ! त्वया ज्ञात्वाऽज्ञात्वा वा दत्तम् ? तदनु अजानता मया दत्तं परमथ यूयं यथेच्छं भुङ्ग्ध्वमित्युक्त तत्स्वयं भुङ्क्ते साधर्मिकेभ्यो वा ददाति कारणे सति । कारणाभावे तु परिष्ठापयतीत्युक्तमाचाराङ्गद्वितीयश्रुतस्कन्धे पिण्डैषणाऽध्ययनदशमोद्देशके ॥१-९३॥

तथा—ये मनःप्रवीचाराः सुरास्तैर्मनःपरीणामे कृते तदर्थं तास्तादृश्यो देव्यो मनसैव कथं प्रगुणीभवन्ति ? तासां तदवबोधे किं ज्ञानमस्ति ? इति, ऊर्ध्वमवधेः श्रुते स्तोकविषयत्वरूपणादिति प्रश्नोऽत्रोत्तरम्—आनतकल्पादिस्थैर्मनःप्रवीचारकैर्देवैर्मनःपरीणामे कृते सौधर्मेशानदेव्योऽपि तदर्थमुच्चावचानि मनांसि संप्रधारयन्त्यस्तिष्ठन्ति परं ता देवानां मनःपरीणामं कथं जानन्ति ? उपरिष्टादवधेरल्पत्वादिति, अत्र यथा दिव्यानुभावतः शुक्रपुद्गलास्तासां शरीरे रूपादितया परिणमन्ति तथा त्वरितमेव तासामङ्गस्फुरणादिना तदभिलाषज्ञानमपि भवतीति ज्ञायते ॥२-९४॥

तथा—उपधानमालारोपणयोः किं फलमुद्दिश्य कर्त्तव्यता ? यत्र च साऽभिहिता तदपि शास्त्रं व्यक्त्या प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्–अत्रोपधानवहनं श्रुताराधननिमित्तम्, मालारोपणं तु तपस उद्यापनार्थं श्रीमहानिशीथादिशास्त्र उक्तमस्ति ॥३-९५॥

तथा—स्थापनाः कियति प्रदेशे ऊर्ध्वमधस्तिर्यक् च दूरे स्थापिताः क्रियाशुद्धिहेतवो भवन्ति ? इति प्रश्नोऽत्रोत्तरम्–अत्रोर्ध्वं मस्तकात् पादयोरधस्तात् तिर्यग् द्रष्टुमशक्ये स्थाने स्थापिताः स्थापनाः क्रियाशुद्धिनिमित्तं न भवन्तीति वृद्धवादः । यत्तूपरितनभूम्यादौ स्थापितासु तास्वधस्तनभूम्यादौ क्वापि क्रियायाः क्रियमाणत्वं तत्कारणिकमिति ज्ञेयम् ।४-९६।

## अथ पण्डितहापर्षिगणिकृत-
## प्रश्नास्तत्प्रतिवचांसि च यथा—

चतुर्दशपूर्वविदो यदाऽऽहारकं शरीरं कृत्वा महाविदेहादौ प्रेषयन्ति तदाऽन्तरालस्था जीवप्रदेशाः किमाहारिणोऽनाहारिणो वा ? यद्याहारिणः किमौदारिकशरीरगृहीताहाराहारिणोऽथवाऽऽहारकशरीरगृहीताहाराहारिणो वा ? इति प्रश्नोऽत्रोत्तरम्–कृताहारकशरीराणां चतुर्दशपूर्वविदामन्तरालस्थजीवप्रदेशानामाहारित्वाद्याश्रित्य ते आहारिण एव न त्वनाहारिणः, तत्रापि ये आत्मप्रदेशा यदौदारिकशरीरसम्बद्धास्ते तदौदारिकशरीरगृहीतान् पुद्गलानाहारयन्ति, ये त्वाहारकसंबद्धास्ते तद्गृहीतानिति ज्ञायते । यतः–"अविचलानष्टौ प्रदेशान् विहाय सर्वे आत्मप्रदेशा उत्तप्तभाजनोदकवदुद्वर्तमाना स्सन्ति" इति सिद्धान्तवचनादन्तरालवर्त्तित्वमपि नियतं नास्ति तेषाम्, परावृत्तेः संभवात्, तेन कदाचिदौदारिक-

शरीरसंबद्धत्वं कदाचिदाहारकशरीरसंबद्धत्वं च भवति, न त्वेकान्तेन येऽन्तरालवर्तिनस्तेऽन्तरालवर्तिन एव भवन्ति। किञ्च ये यदाऽन्तरालवर्तिनस्तेऽप्यौदारिकादिकाययोगितया स्वावगाढपुद्गलानाहारयन्तीति संभाव्यते, विग्रहगत्यादि विना-जीवस्यानाहारित्वनिषेधादिति ॥१-९७॥

तथा—सिद्धजीवानां करचरणपादाङ्गुलीनासाद्यवयवाकारः संभाव्यते न वा? इति प्रश्नोऽत्रोत्तरम्–सिद्धजीवानां करचरणाद्याकारः संभाव्यते, यतः "अरूविणो जीवघणा" इत्यत्र घनाश्च शुषिरपूरणतो निचितप्रदेशतयेति श्रीशान्तिसूरिवचनेन शरीरान्तर्वर्त्तिशुषिरपूरणमेव दृश्यते न त्ववयवानां बाह्यान्तरपूरणमिति। तथा श्रीहरिभद्रसूरि-श्रीमलयगिरिप्रमुखैरपि शुषिरपूरणमेवोक्तमस्तीति ॥२-९८॥

तथा—महानिशीथे नागिलेन यानि साधुदूषणानि कथितानि, तथा दूषणदर्शनाच्च ते मुक्तास्तत् मार्गानुयायि न वा? इति प्रश्नोऽत्रोत्तरम्–श्रीमहानिशीथोक्तनागिलेन ते साध्वाभासा अज्ञानवर्त्तिनो दूषणदर्शनात्त्यक्तास्तत् मार्गानुयायि एव, असाधुकुगुरुपरिहारो हि मार्ग एवेति ॥३-९९॥

तथा—ब्रह्मदत्तचक्रिणा स्वल्पादेवायुषः कथं दिग्विजयः कृत? इति प्रश्नोऽत्रोत्तरम्–ब्रह्मदत्तस्य स्वल्पेन कालेन दिग्विजयो दिव्यानुभावाद्, अन्यदपि तस्य भूयो दिव्यानुभावसाध्यमभूदिति संभाव्यत इति ॥४-१००॥

तथा—स्त्रीरत्न लोहपुरुषं स्पृशति तदा स गलति तत्कथम्? इति प्रश्नोऽत्रोत्तरम्—स्त्रीरत्नस्पर्शाल्लोहपुरुषगलनमुत्कृष्टातिशयितकामविकारजनितप्रबलोष्णताविशेषादिति ॥५-१०१॥

तथा—एकाकाशप्रदेशस्योत्कर्षतो धर्माधर्मास्तिकायसम्बन्धिसप्तप्रदेशस्पर्शनोक्ता तत्र विदिक्स्थितप्रदेशस्पर्शना कथं नोक्ता ? इति प्रश्नोऽत्रोत्तरम्—एकस्याकाशप्रदेशस्य धर्माधर्मास्तिकायसत्कैर्दिक्स्थैः प्रदेशैरेव स्पर्शना न तु विदिक्स्थितैः; अयं चाऽर्थः समप्रमाणैश्चतुरस्रादिभिर्दिग्विदिक्स्थापितैः सुबोध एवेति ॥६-१०२॥

तथा—तीर्थङ्कराणां चतुर्दशसहस्रादिका साधुसङ्ख्योक्ता, चतुर्दशपूर्व्यादयः किं तत्सङ्ख्यामध्ये गण्यन्ते यदि वा ते भिन्नाः ? इति प्रश्नोऽत्रोत्तरम्—"गणहरकेवलिमणओहिपुव्विवेउव्विवाइणं संखं । मुणिसंखाए सोहिअ नेया सामन्नमुणिसंखा ॥१॥ एगूणवीसलक्खा तह बासीई हवंति सहसाइं । इगवन्ना अहियाई सामन्नमुणीण सव्वग्गं" ॥२॥ तथा—"अट्ठावीसं लक्खा अडयालीसं च तह सहस्साइं । सव्वेसिं पि जिणाणं जईण माणं विणिद्दिट्ठं" ॥१॥ इति वचनयोरनुसारेण यथोक्तसङ्ख्यामध्ये गण्यन्ते चतुर्दशपूर्व्यादय इति संभाव्यते । तथा—"पञ्चाशीतिसहस्राणि लक्षं सार्धशतानि षट् । परिवारेऽभवन् सर्वे मुनयस्त्रिजगद्गुरोः" ॥१॥ एतदनुसारेण च श्रीऋषभदेवस्य चतुरशीतिसहस्रसङ्ख्यातो भिन्ना एव ते इति । यतः—सामान्यसाधुविशेषसाधुसङ्ख्यामिलनेन यथोक्तसङ्ख्या संभावनया पूर्यमाणास्तीति, तत्त्वं तु सर्वविद्वेद्यमिति ॥७-१०३॥

तथा—चक्री वैक्रियं रूपं कृत्वा स्त्रियं भुनक्ति तत्र संतानं स्यान्न वा ? इति प्रश्नोऽत्रोत्तरम्—चक्रिणो वैक्रियशरीरेण संतानोत्पत्तिर्न संभाव्यते किन्त्वौदारिकेणैव, "केवलं ते वैक्रियशरीरान्तर्गता इति न गर्भाधानहेतवः" इति प्रज्ञापनावृत्ति-

वचनात् । या च शिलादिस्थानां सूर्यादेरुत्पत्तिः श्रूयते तत्रापि समाधानं कृतमस्ति। तच्चेदम्-"वैक्रियेभ्यः सुराङ्गेभ्यो गर्भो यद्यपि नोद्भवेत्। तदानीतौदारिकाङ्गधातुयोगात्तु संभवी" ॥१॥ इत्यादि मल्लवादिप्रबन्धे ॥८-१०४॥

॥ इति सकलसूरिपुरन्दरपरमगुरुतपागच्छाधिराजभट्टारकश्री ५ श्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्य-पण्डितकीर्तिविजयगणिसमुच्चिते द्वितीयः प्रकाशः ॥



## अथ तृतीयः प्रकाशः ।



### अथ पुनर्महोपाध्यायश्रीकल्याणविजय-गणिकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

श्राद्धविधौ चतुर्दशनियमाधिकारे सचित्तविरतिवर्जं यन्मुखे क्षिप्यते तत्सर्वं द्रव्यमिति भणनादनाहारत्रिफलादि मुखे क्षिप्तं द्रव्यमध्ये गण्यते न वा? इति प्रश्नोऽत्रोत्तरम्-त्रिफलाद्यनाहारवस्तु द्रव्यमध्ये गण्यते न वा? तत्रैवं प्रतिभाति यदनाहारवस्तु प्रायो द्रव्यमध्ये गण्यते, यदि च प्रत्याख्यानावसरे तदगणनमेव विवक्षितं तदा न गण्यतेऽपि। यथा सचित्तविकृत्योर्द्रव्यमध्ये ग्रन्थेऽगणनेऽभिहितेऽपि संप्रति बहवो जनाः प्रायस्तयोर्द्रव्यमध्ये गणनां कुर्वाणा उपलभ्यन्त इति ॥१-१०५॥

तथा—ग्रन्थिसहितप्रत्याख्याने ग्रन्थिमोचनेऽनाहारो मुखे क्षिप्तः शुध्यति न वा? इति प्रश्नोऽत्रोत्तरम्-ग्रन्थिसहितम-

त्याख्याने मुक्तेऽपि कारणेऽनाहारवस्तुग्रहणं कल्पत इति ज्ञायते ॥२-१०६॥

तथा—ऊर्ध्वैरथिकशब्दोऽस्त्युत्तराध्ययनबृहद्वृत्तिप्रथमपत्रे स कस्य वाचकः ? इति प्रश्नोऽत्रोत्तरम्—ऊर्ध्वैरथिकशब्दमाश्रित्य सिद्धान्तविषमपदपर्यायान्तर्गतोत्तराध्ययनविषमपदपर्याये द्रमकवाचकत्वमुक्तमस्ति ॥३-१०७॥

तथा—षण्मासातिक्रमसंभवे पर्युषणाया अर्वागुपस्थापना भवति न वा ? इति, तदनन्तरमपि विजयदशम्या अर्वाक् परतो वा ? इति प्रश्नोऽत्रोत्तरम्–षण्मासातिक्रमसंभवे पर्युषणाया विजयदशम्याश्चार्वागप्युपस्थापना क्रियते, अन्यथा तु विजयदशम्याः पश्चादेव ॥४-१०८॥

तथा—पूर्णिमाऽमावस्ययोर्वृद्धौ पूर्वमौदयिकी तिथिराराध्यत्वेन व्यवह्रियमाणाऽऽसीत्, केनचिदुक्तं श्रीतातपादाः पूर्वतनीमाराध्यत्वेन प्रसादयन्ति तत्किम् ? इति प्रश्नोऽत्रोत्तरम्–पूर्णिमाऽमावास्ययोर्वृद्धौ औदयिक्येव तिथिराराध्यत्वेन विज्ञेया ॥५-१०९॥

तथा—अन्यदर्शनिनां धर्मानुष्ठानमनुमोदनीयं न वा ? इति प्रश्नोऽत्रोत्तरम्–अन्यदर्शनिनामपि यन्मार्गानुसारि धर्मकृत्यं तच्छास्त्रानुसारेणानुमोदनार्हं ज्ञायत इति । ६-११०॥

तथा—उपस्थापनाकरणानन्तरं कियत्सु योगदिनेष्ववशिष्टेषु सत्सु मान्द्यादिहेतुना यदि षण्मास्यतिक्रामति तदा पुनः प्रव्रज्यायोगोद्वहनपूर्वकमुपस्थापना क्रियते तत्र प्रव्रज्या गच्छनायकेनान्येन वा प्रदेया ? इति प्रश्नोऽत्रोत्तरम्–प्रव्रज्या गच्छनायकेन विधेया ॥७-१११॥

तथा—श्रीआचार्यादीनां वाचनादानमङ्गोपाङ्गवाचनानन
छेदग्रन्थप्रकीर्णकादिसंबन्धि अङ्गविद्याप्रकीर्णकं यावत्केनानु
मेण भवति ? इति प्रश्नोऽत्रोत्तरम्–श्रीआचार्यादीनां वाचन
क्रममाश्रित्य किञ्चिद्वाचनासत्कच्छुटकपत्र[1]स्थविधिना अथव
सामाचार्यन्तर्गतयोगविध्यनुसारेण च क्रियमाणमस्तीति व
ध्यम् ॥८–११२॥

तथा—श्रीभगवत्यनुसारेण कर्णिकावृत्ति-वीरचरित्राद्य
नुसारेण च जमालेः कियन्तो भवाः ? इतिप्रश्नोऽत्रोत्तरम्–भगवतीसूत्र-कर्णिकावृत्ति-वीरचरित्राद्यनुसारेण जमालेः पञ्चदश भवा ज्ञायन्ते ॥९–११३॥

तथा—"वण्णगंधोवमेहिं च" इति श्लोकव्याख्याने श्राद्धदिनकृत्ये प्रोतपुष्पैः पूजनाक्षराणि वर्तन्ते, तत्र शालिकाः पाठं परावृत्त्य मिथ्यार्थं कुर्वते, खाचास्तु मन्यन्त एव न, तद्विषये यचन्यान्यप्यक्षराणि भवन्ति तदा तानि प्रसाद्यानि इति प्रश्नोऽत्रोत्तरम्–प्रोतपुष्पैः पूजनाक्षराणि सांप्रत श्राद्धदिनकृत्यसत्कानि ज्ञातानि सन्ति ॥१०–११४॥

तथा—महाहिंसायत्त्वेनाश्विनचैत्रदिनानि सिद्धान्तवाचनादिष्वस्वाध्यायदिनानीति कृत्वा त्यज्यन्ते, तद्वदीदृदिनमपि तेन हेतुना कथं न त्यज्यन्ते ?, केचिच्च मतिनस्तद्दिनं त्यजन्ति, आत्मनां का मर्यादा ? इति प्रश्नोऽत्रोत्तरम्–ईदृदिनाऽस्वाध्यायविषये [2]वृद्धानाचरणमेव निमित्तमवसीयते॥११-११५॥

१ "प्रवुद्धरिसं तु सामाचार्यन्तर्गतयोगविध्यनुसारात्र क्रियमाणमस्तीति योध्यम्" इति पाठः प्रत्यन्तरे ।

२ "वृद्धाचरणमेव" इति पाठः प्रत्यन्तरे ।

## अथ पुनः पण्डितजगमालगणिकृत-प्रश्नास्तत्प्रतिवचांसि च यथा—

रात्रौ ये सूक्ष्ममक्षिकां भक्षयन्ति तेषां सान्ध्यप्राभातिकप्रतिक्रान्तिः शुद्धिमती अन्यथा वा ? इति प्रश्नोऽत्रोत्तरम्—"अविहिकया वरमकयं उस्सुयवयणं कहंति गीयत्था । पायच्छित्तं जम्हा अकए गुरुअं कए लहुअं" ॥१॥ इति प्रतिक्रमणहेतुगर्भगाथानुसारेण प्रतिक्रमणकरणमेव सुन्दरं प्रतिभाति ॥१-११६॥

तथा—रात्रौ भुक्तिमतां प्रातर्नमस्कारसहिताद्यपोषणप्रमुखप्रत्याख्यानं शुध्यति न वा ? इति प्रश्नोऽत्रोत्तरम्—प्रत्याख्यानं शुध्यति परं भ्राजते नेति ॥२-११७॥

तथा—चतुर्मासकमध्ये साधूनां नगरप्रवेशनिर्गमे पादप्रमार्जनं भवति न वा ? इति प्रश्नोऽत्रोत्तरम्—रजोऽवगुण्डनसद्भावे सति विधीयते नान्यथा ॥३-११८॥

तथा—तपागणवर्त्तिवाचंयमवृन्दं विनाऽन्यत्र चारित्रश्रद्धानं क्रियते न वा ? इति प्रश्नोऽत्रोत्तरम्—तपागणादन्यत्र चारित्रं न श्रद्धीयत इत्येकान्तो नास्ति ॥४-११९॥

तथा—यथा वनस्पत्यादिषु जीवा एकावतारिणः शास्त्रे उक्तास्तथा मतान्तरीयवृन्दमध्येऽपि कश्चिद्भवति न वा ? इति प्रश्नोऽत्रोत्तरम्—अत्र एकान्तेन निषेधो ज्ञातो नास्ति ॥५-१२०॥

तथा—कथञ्चित्कारणे योगोद्वहनं विना कल्पसूत्रवाचनस्यानुज्ञा न वा ? इति प्रश्नोऽत्रोत्तरम्—अत्र कारणे तद्वाचनं कैश्चित् क्रियमाणमस्ति, अक्षराणि तु नोपलभ्यन्ते ॥६-१२१॥

तथा—कार्मिकभुक्तिमतां मध्ये वसन् शुद्धग्राही साधुर्भवति न वा ? इति प्रश्नोऽत्रोत्तरम्–कारणे सति कार्मिकभोज्यपि यदि साधुर्भवति तर्हि तद्भुक्तिमन्मध्ये वसतः शुद्धग्राहिणः साधुत्वे का शङ्का ?, कारणाऽभावे तु द्वयोरपि साधुत्वे विचार एवास्ति ॥७-१२२॥

तथा—देशविरतिमन्तरेण ये प्रतिक्रान्तिं कुर्वन्ति श्राद्धास्तेषां प्रतिक्रान्तिः फलवती न वा ? इति प्रश्नोऽत्रोत्तरम्–सा फलवतीति विज्ञायते, श्राद्धकुलोत्पन्नत्वेनोच्चाराभावेऽपि देशविरतिपरिणामसद्भावात् सामायिकोच्चारस्य विरतिरूपत्वाद् भावविशुद्धेश्चेति ॥८-१२३॥

तथा—निम्बुकरसभावितोऽजमकस्तद्भावितं विश्वभेषजं च द्विविधाहारे कल्पते न वा ? इति प्रश्नोऽत्रोत्तरम्–निम्बुकरसभावितोऽजमकस्तद्भावितं विश्वभेषजं च द्विविधाहारे आचाम्ले च [illegible]ल्पत इति ॥९-१२४॥

तथा—श्वेतसैन्धवाऽचित्ततायां कान्यक्षराणि ? इति प्रश्नोऽत्रोत्तरम्–श्वेतसैन्धवाचित्तताया अक्षराणि श्राद्धविधौ वर्तन्ते ॥१०-१२५॥

तथा—तैलादिमाननेनाऽऽदेशप्रदानं शुध्यति न वा ? इति प्रश्नोऽत्रोत्तरम्–तैलादिमाननेन प्रतिक्रमणाद्यादेशप्रदानं न सुविहिताचरितं, परम् क्वापि क्वापि तदभावे जिनभवनादिनिर्वाहाऽसंभवेन निवारयितुमशक्यमिति ॥११-१२६॥

तथा—मण्डलीपट्टिःस्थगीतार्थमिलने व्याख्यानकरणे वृद्धस्यपर्यायक्षामणकविधौ च को विधिः ?, अथ वृद्धो मण्डलीपट्टिःस्थः समेति तदा लघुना पट्टिकमोचनाऽभ्युत्थानादि विधेयं

न वा ? इति, मण्डलीबहिःस्थपार्श्वे श्राद्धश्राद्धीभिरुपधानाद्यनुष्ठानं विधेयं न वा ? इति स्पष्टतया प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्–मण्डलीबहिःस्थेन व्याख्यानं न विधेयमन्यव्याख्यातृसद्भावे, वन्दनोत्थानादिव्यावहारस्तु तस्यापि विधेय एव। किञ्च अन्येषामभावे स श्राद्धश्राद्धीनामुपधानादिक्रियां कारयति ॥१२-१२७॥

तथा–वर्णान्तरप्राप्तं कसेल्लकनीरं प्रासुकं भवति न वा ? इति प्रश्नोऽत्रोत्तरम्–वर्णान्तरप्राप्तं कसेल्लकनीरं प्रासुकम्, परम् आत्मवृद्धैरनाचीर्णमिति ज्ञेयम् ॥१३-१२८॥

## अथ पण्डितआनन्दसागरगणिकृत–
## प्रश्नास्तत्प्रतिवचांसि च यथा–

चैत्यालये चैत्यवन्दनकरणमीर्यापथिकीप्रतिक्रमणपुरस्सरमेवाऽन्यथापि वा ? इति प्रश्नोऽत्रोत्तरम्–चैत्यालये ईर्यापथिकीपुरस्सरं चैत्यवन्दनकरणविषये एकान्तो नास्तीति ज्ञायते ॥१-१२९॥

तथा–नमस्कारसहितप्रत्याख्यानं रात्रिप्रत्याख्यानमध्ये पृथग् वा ? तेन प्रत्याख्यानेन श्राद्धः पौरुषीं यावत्स्थितस्तस्य पौरुष्या लाभो द्विघटिकसत्को वा ? इति प्रश्नोऽत्रोत्तरम्–नमस्कारसहितप्रत्याख्यानं दिनमध्ये आयाति न तु रात्रिमध्ये। तथा तत्प्रत्याख्यानं विधाय पौरुषीं यावदनुपयोगेन स्थीयते तदा न लाभाय, उपयोगपूर्वं तु लाभायेति ॥२-१३०॥

तथा–त्रिषष्टिशलाकापुरुषा गार्हस्थ्येऽष्टमादितपःकारित्वेन विरतिमन्तोऽन्यथा वा ? इति प्रश्नोऽत्रोत्तरम्–त्रिषष्टिशलाकापुरुषा गार्हस्थ्ये विरतिमन्तो न श्रूयन्ते, अष्टमादितपोविधानं तु सांसारिककार्यार्थं न तु निर्जरार्थम् ॥३-१३१॥

तथा—युगपत्कृतसामायिकयोरुभयोर्मध्ये एकेन संपूर्ण सत्पारितम्, द्वितीयेन पौरुषीं यावत्स्थितम्, द्वयोर्लाभे साम्यं विशेषो वा? इति प्रश्नोऽत्रोत्तरम्—कृतसामायिकस्य श्राद्धस्य घटिकाद्वयस्योपरिष्टात्सामायिकपालनमुपयोगे सति लाभाय, अनुपयोगे त्वतिचारायेति ज्ञातमस्ति ।।४-१३२।।

तथा—श्राद्धानां पौरुष्यादिप्रत्याख्यानं चतुर्विधाहारमेव भवत्यन्यथापि वा? इति प्रश्नोऽत्रोत्तरम्—'निसिपोरिसिपुरिमेगासणाइं सड्ढाण दुतिचउद्धा" इति भाष्यवचनात् त्रिविधाहारं निविधाहार चतुर्विधाहारं वा कर्तुं कल्पत इति ।।५-१३३।।

## अथ पुनः पण्डितकान्हर्षिगणिकृत-प्रश्नास्तत्प्रतिवचांसि च यथा—

श्रीमहावीरस्य वन्दनार्थं स्वविमानेन चन्द्रसूर्यौ समागतौ स्तत्र तारकविमानानामन्तरालस्याल्पत्वेन महतोस्तयोर्विमानयोरागमनं कथ सगच्छते? इति प्रश्नोऽत्रोत्तरम्—यथा तयोः स्वविमानेनागमनमाश्चर्येऽन्तर्भवति तथा तारकविमानान्तरालप्रवेशोऽपीति संभाव्यते ।।१-१३४।।

तथा—तीर्थकृतां कल्याणकेषु सौधर्मेन्द्रादयो नन्दीश्वरद्वीपपर्यतिरतिकरपर्वतेषु विमानसंकोचं विधायाऽत्राऽऽयान्ति तदा स्थिरतारकाणां मध्ये तानि कथ निर्गच्छन्त्यन्तरस्याल्पत्वात्? इति प्रश्नोऽत्रोत्तरम्—"तारस्स य तारस्स य जंबुद्दीवंमि अंतरं गुरुअं" इत्यादि जम्बूद्वीपे यथा तारकाणामुत्कमन्ति तथान्यत्रान्तरालमानस्याधयणान्न काप्याशङ्केति ।।२-१३५।।

तथा—एकचतुर्थप्रत्याख्यानस्य श्राद्धस्य पारणके उत्त-

तथा—परमाणोर्वर्णादिपरावर्ती जायते न वा ? इति प्रश्नोऽत्रोत्तरम्—जायत इति ज्ञेयम् ॥३-१४५॥

तथा—गौतमस्वामी गोचरचर्यामेकाक्येव गतवान् ? अथवा ससङ्घाटकः ? इति प्रश्नोऽत्रोत्तरम्—प्राय एकाक्येव भगवत्यागमे श्रूयते, परमागमविहारित्वेनोचितानुचितविचारो न युक्तिमान् ॥४-१४६॥

तथा—ग्रैवेयकादिषु जलं नास्तीति तत्रत्या देवाः कथं जिनपूजां कुर्वन्ति ? इति प्रश्नोऽत्रोत्तरम्—अत्र जलवद्वनस्पतिरपि नास्तीति तेषां देवानां प्रायो गमनागमनादिप्रयोगाभावात् पूजोपस्काराभावाच्च द्रव्यतो जिनपूजाकरणं न संभवतीति बोध्यम् ॥५-१४७॥

तथा—सूक्ष्मबादरा निगोदाः पर्याप्ता अपर्याप्ताश्च, एकस्मिन्निगोदेऽनन्ता जीवाः, अत्र निगोदः कः ? जीवाश्च के ? इति व्यक्त्या प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—निगोदशब्देनैकं शरीरं वनस्पतिरूपं साधारणमनन्तजीवजनितमुच्यते, तत्र चानन्ता जीवास्तिष्ठन्ति, अत एवानन्तकायिका जीवाः साधारणा उच्यन्ते ॥६-१४८॥

तथा—यदा चतुर्दश्यां कल्पो वाच्यते, अमावास्यादिवृद्धौ वाऽमावास्यायां प्रतिपदि वा कल्पो वाच्यते तदा षष्ठतपः क्व विधेयम् ? इति प्रश्नोऽत्रोत्तरम्—षष्ठतपोविधाने दिननैयत्यं नास्तीति यथारुचि वहिवीयतामिति कोऽत्राग्रहः ? ॥७-१४९॥

तथा—तीर्थङ्कराः समवरणस्थाः किं गृहिवेषेण यतिवेषेण वा दृश्यन्ते ? इति प्रश्नोऽत्रोत्तरम्—न गृहिवेषेण नापि

कल्पते न वा ? इति प्रश्नोऽत्रोत्तरम्—कल्पत इति ज्ञातमस्ति ॥८–१४१॥

तथा—"देसियराइयपक्खियचाउम्मासे तहेव वरिसे य। इक्किक्के तिन्नि गमा नायव्वा पंचसेएसु" ॥१॥ इति कायोत्सर्गनिर्युक्तिसत्कचतुर्नवतितमगाथायाः कोऽर्थः ? इति प्रश्नोऽत्रोत्तरम्—कायोत्सर्गनिर्युक्तिचतुर्नवतितमगाथार्थो हारिभद्र्यां वृत्तौ यथा–'देसिय'त्ति दैवसिके प्रतिक्रमणे दिवसेन निर्वृत्तं दैवसिकम्, 'राइय' त्ति रात्रिके, 'पक्खिय' त्ति पाक्षिके, 'चउम्मासिए' त्ति चातुर्मासिके, तहेव वरिसे य त्ति तथैव वार्षिके च, वर्षेण निर्वृत्तं वार्षिकं सांवत्सरिकमिति भावना। एकैकस्मिन् प्रतिक्रमणे दैवसिकादौ त्रयो गमा ज्ञातव्याः। पञ्चस्वेतेषु दैवसिकादिषु कथं त्रयो गमाः ? सामायिकं कृत्वा कायोत्सर्गकरणम्, सामायिकं कृत्वा प्रतिक्रमणम्, सामायिकमेव कृत्वा पुनः कायोत्सर्गकरणम्; इह यस्मादियसादितो दिवसप्रधानं च तस्माद्दैवसिकमाद्यावित्ति गाथार्थः ॥९–१४२॥

## अथ पुनः पण्डितनगर्षिगणिकृत-
## प्रश्नात्तत्प्रतिवचांसि च यथा—

यथैको बादरपर्याप्तस्तत्र तन्निश्रयाऽसङ्ख्याता अपर्याप्ता भवन्तीत्यत्राज्ञैव प्रमाणं युक्तिर्वा ? इति प्रश्नोऽत्रोत्तरम्–अत्राज्ञैव प्रमाणम्, युक्तिस्तु दृष्टा नास्तीति ॥१–१४३॥

तथा—संपूर्णो धर्मास्तिकायो द्रव्यमुच्यते स्कन्धो वा ? इति प्रश्नोऽत्रोत्तरम्–संपूर्णो धर्मास्तिकायो द्रव्यमुच्यते क्वचित्स्कन्धोऽप्युपचारात्, नात्र किमपि बाधकं ज्ञायते ॥२–१४४॥

तथा—परमाणोर्वर्णादिपरावर्ती जायते न वा? इति प्रश्नोऽत्रोत्तरम्—जायत इति ज्ञेयम् ॥३-१४५॥

तथा—गौतमस्वामी गोचरचर्यामेकाक्येव गतवान्? अथवा ससङ्घाटकः? इति प्रश्नोऽत्रोत्तरम्—प्राय एकाक्येव भगवत्या-द्यागमे श्रूयते, परमागमविहारित्वेनोचितानुचितविचारो न युक्तिमान् ॥४-१४६॥

तथा—ग्रैवेयकादिषु जलं नास्तीति तत्रत्या देवाः कथं जिनपूजां कुर्वन्ति? इति प्रश्नोऽत्रोत्तरम्—अत्र जलवद्वनस्पति-रपि नास्तीति तेषां देवानां प्रायो गमनागमनादिप्रयोगाभावात् पूजोपस्काराभावाच्च द्रव्यतो जिनपूजाकरणं न संभवतीति बोध्यम् ॥५-१४७॥

तथा—सूक्ष्मबादरा निगोदाः पर्याप्ता अपर्याप्ताश्च, एक-स्मिन्निगोदेऽनन्ता जीवाः. अत्र निगोद कः? जीवाश्च के? इति व्यक्तया प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—निगोदशब्देनैकं शरीरं वनस्पतिरूपं साधारणमनन्तजीवजनितमुच्यते, तत्र चानन्ता जीवास्तिष्ठन्ति, अत एवानन्तकायिका जीवाः साधा-रणा उच्यन्ते ॥६-१४८॥

तथा—यदा चतुर्दश्यां कल्पो वाच्यते, अमावास्यादि-वृद्धौ वाऽमावास्यायां प्रतिपदि वा कल्पो वाच्यते तदा षष्ठ-तपः क विधेयम्? इति प्रश्नोऽत्रोत्तरम्—षष्ठतपोविधाने दिन-नैयत्यं नास्तीति यथारुचि तद्विधीयतामिति कोऽत्राग्रहः? ॥७-१४९॥

तथा—तीर्थङ्कराः समवरणस्थाः किं गृहिवेषेण यति-वेषेण वा दृश्यन्ते? इति प्रश्नोऽत्रोत्तरम्—न गृहिवेषेण नापि

यतिवेषेण तीर्थङ्करा दृश्यन्ते किन्तु लोकोत्तररूपेण, अत एवामुकसदृशा इति वक्तुं न शक्यते—"न य नाम अन्नलिंगे नो गिहिलिंगे कुलिंगे वा" इत्यादिवचनात् ॥८-१५०॥

तथा—गणधराः प्रतिक्रमणं कुर्वाणाः स्थापनां कुर्वन्ति न वा? कुर्वाणा अपि तीर्थङ्करस्यान्यस्य वा? इति प्रश्नोऽत्रोत्तरम्—तीर्थङ्करस्य देवगुरुरूपत्वेन तत्समीपे प्रतिक्रमणादिकुर्वतां स्थापनाप्रयोजनं न स्यात्। जिनपरोक्षे तत्कुर्वतां तु स्थापनाकरणमात्मनामिवेति संभाव्यते ॥९-१५१॥

तथा—गुरुपूजासत्कं सुवर्णादिद्रव्यं गुरुद्रव्यमुच्यते न वा?

तथा—प्रागेवं पूजाविधानमस्ति न वा?

तथा—कुत्र चैतदुपयोगि? इति प्रसाद्यमिति प्रश्ना अत्रोत्तराणि-गुरुपूजासत्कं सुवर्णादि गुरुद्रव्यं न भवति स्वनिश्रायामकृतत्वात्, स्वनिश्राकृतं च रजोहरणाद्यं गुरुद्रव्यमुच्यत इति ज्ञायते ॥१०-१५२॥ तथा हेमाचार्याणां कुमारपालराजेन सुवर्णकमलैः पूजा कृताऽस्त्येतदक्षराणि कुमारपालप्रबन्धे सन्ति ॥११-१५३॥ तथा—"धर्मलाभ इति प्रोक्ते दूरादुच्छ्रितपाणये। सूरये सिद्धसेनाय ददौ कोटिं नराधिपः" ॥१॥ इदं चाग्रपूजारूपं द्रव्यं तदानीं सङ्घेन जीर्णोद्धारे व्यापारितमिति तत्प्रबन्धादौ श्रूयते। अत्रार्थे बहु वक्तव्यमस्ति कियल्लिख्यते इति प्रश्नत्रयप्रतिवचनानि[1] ॥१२-१५४॥

तथा—कृत्रिम वस्तु कियत्कालं तिष्ठति-सङ्ख्यातमसङ्ख्यातं वा? इति प्रश्नोऽत्रोत्तरम्—कृत्रिममनेकप्रकारं तेनात्रार्थे

---

[1] 'वच.' इति पाठान्तरम्।

भगवत्या अष्टमशतकनवमोद्देशकसूत्रवृत्तिविलोक्या। किञ्चा-न्नार्थेऽष्टापदाद्रिचैत्यमाश्रित्य यदि कश्चिद्विप्रतिपद्यते तदा तमाश्रित्य वसुदेवहिण्डो--"तओ ते जण्हुपमितिया कुमारा पुरिसे आणवेति-गवेसह अट्ठावयतुल्लं पव्वयं ति। ततो तेहिं तुल्लो पव्वओ न दिट्ठो त्ति निवेइयं। ततो अमच्चं ते लवंति-केवइयं पुण कालं आययणं अवसिज्जस्सइ? ततो तेण अमच्चेण भणियं-जाव इमा ओसप्पिणि त्ति मे केवलिजिणाण अंतिए सुयं" इति प्रतिवचः। तथा सिद्धान्ताक्षराणि कानीति ब्रुवाणस्य जम्बूद्वीपप्रज्ञप्त्यादौ सुषमासुषमारकादिवर्णके वापी-दीर्घिकाकांस्यादिधातुप्रमुखकृत्रिमपदार्थसद्भावो दर्शनीय इति ॥१३-१५५॥

तथा—कुहणाशब्देन भूमिस्फोटा व्याख्याताः सन्ति जीवाभिगमसूत्रे प्रत्येकवनस्पत्यधिकारे, जीवविचारे तु साधा-रणमध्ये भूमिस्फोटाः कथमुक्ता:? इति प्रश्नोऽत्रोत्तरम्-कुहणाशब्देन भूमिस्फोटा व्याख्यातास्सन्ति प्रत्येकवनस्पत्य-धिकारे जीवाभिगमसूत्रे, जीवविचारे तु साधारणमध्ये भूमि-स्फोटा उक्तास्सन्ति, अत्रार्थे तत्त्वं तत्त्वविद्वेद्यमिति बो-ध्यम् ॥१४-१५६॥

तथा—विमानानामन्तराले भूमिरस्ति न वा? इति प्रश्नोऽत्रोत्तरम्–सा नास्तीति विज्ञायते, यतो भगवत्यादौ नरकसप्तकाः सप्त ईषत्प्राग्भारा चैकेत्यष्टैव पृथिव्य उक्ता-स्सन्ति; यदि स्वर्गेऽपि साऽभविष्यत्तदाऽधिकाऽप्युक्ताऽभवि-ष्यदिति ॥१५-१५७॥

तथा—"दिव्वं तेयलेसं असहमाणे"त्ति भगवतीपोडश-

कार्तिकाभिधानोऽभिनवश्रेष्ठी बभूव, गङ्गदत्तस्तु जीर्णश्रेष्ठीति। एतौ मुनिसुव्रतजिनपार्श्वे प्रव्रजितौ। वन्दारुवृत्तौ तु विशालायां श्रीमहावीरकायोत्सर्गाधिकारे जीर्णश्रेष्ठ्यभिनवश्रेष्ठिनाविति तौ कौ? इति प्रश्नोऽत्रोत्तरम्–"दिव्वं तेयलेसं असहमाणे" एतत्सूत्रवृत्तौ यौ जीर्णश्रेष्ठ्यभिनवश्रेष्ठिनौ श्रीमुनिसुव्रतस्वामिपार्श्वे प्रव्रजितौ तावन्यौ। वन्दारुवृत्तौ तु विशालायां यौ जीर्णश्रेष्ठ्यभिनवश्रेष्ठिनौ प्रोक्तौ तौ भिन्नावेव ज्ञायेते तेनात्र कः संशयः? ॥१६–१९८॥

तथा—"तस्स अयसिआ ओलंबंति तं च वेज्जे अद्क्खु"त्ति भगवतीषोडशशतकपञ्चमोद्देशके क्रियाधिकारे अत्र वैद्यस्य का क्रिया? किं जीवसत्कप्राणातिपातादिका किंवा कार्यकरणरूपा? इति प्रश्नोऽत्रोत्तरम्–"तस्स अयसिआ ओलंबंति तं च वेज्जे अदक्खु" एतत्सूत्रे वैद्यस्य या क्रिया सा व्यापारजन्या न तु जीवघातजन्या, अर्शसां जीवत्वप्रतिपादकाक्षराणामनुपलम्भादिति ॥१७–१९९॥

तथा—"भवियदव्वनेरइयस्स णं भंते! केवइयं कालं ठिई पन्नत्ता? गोयमा! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडी"त्ति। तथा—"भवियदव्वअसुरकुमारस्स णं भंते! केवतियं कालं ठिई पन्नत्ता? गोयमा! जहन्नेणं अंतोमुहुत्त उक्कोसेणं तिन्नि पलिओवमाइं"ति। तत्कथं स जीवो जन्मभवनानन्तरमेवायुर्बध्नाति किंवाऽन्यभवान्तरित ?, आयुर्बन्धे तु त्रिभागादि शास्त्रे प्रतिपादितं दृश्यत इति निर्णयः प्रसाद्य इति प्रश्नोऽत्रोत्तरम्–"भवियदव्वनेरइअस्स०" इत्यत्र–"एगभविए अवद्धाउए अ अभिमुहिअनामगोए अ। एए तिन्नि वि देसा दव्वम्मि अ पुंडरीअस्स" ॥१॥ इति श्रीसूत्रकृताङ्गद्वितीयश्रुतस्कन्धनिर्युक्तिवचनाद् योऽनन्तरे आगामिभवे नारको

भावी स अवद्धायुरपि पूर्वभवे द्रव्यनारकोऽभिधीयते। तथा च पूर्वकोटिरुत्कर्षतः सुतरां संभवतीति न कश्चिच्छङ्कावकाशः। एवं "भवियदव्वअसुरकुमारस्सः" इत्यत्रापि भावनीयम् ॥१८–१६०॥

तथा—कुत्रचिद्देशे तैलादिनाङ्गुलीभिः कणिकापिण्डं म्रक्षयित्वा याधाः क्रियन्ते ता आचामाम्लप्रत्याख्याने यतीनां कल्पन्ते न वा? इति प्रश्नोऽत्रोत्तरम्—कुत्रचिद्देशे तैलादिम्रक्षितकरेण याधाः क्रियन्ते ता आचामाम्ले यतीनां कल्पन्त इति ज्ञायते ॥१९–१६१॥

## अथ पण्डितकल्याणगणिकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

"दुसु तिसु तिसु कप्पेसुं, घणुदहिघणवायतदुभयं च कमा" इत्यत्र घनोदधिघनवाततदुभयानां तद्वलयानां च विष्कम्भादि प्रमाणं कियदस्ति? कुत्र च? इति संदिहानोऽस्मि, तन्निर्णये च तत्रत्यभूमेरपि विष्कम्भायामादिनिर्णयो भवतीति प्रश्नोऽत्रोत्तरम्—"दुसु तिसु तिसु कप्पेसुं घणुदहिघणवायतदुभयं च कमा" अत्र घनोदध्यादीनामप्सु स्वर्गेषु विमानानामाधारत्वयाऽऽगमे प्रतिपादनं दृष्टमस्ति, न तु तेषां परिमाण वलयानि चाद्यावद् दृष्टानि स्मृतिमायान्ति ॥१–१६२॥

तथा—ऊकेशवालानां केचिद्देशनिह्नवत्वमास्थियते, तत्र चोपधानापलापित्वं हेतुतयोपदर्शयन्ति। तदुपधानापलापित्वं किं तत्कृतग्रन्थेषु निषिद्धत्वेन ज्ञातम्? सांप्रतीनानामवहनदर्शनेन? स्वधिया वा? अत्रान्त्यस्तूपेक्ष्य एव। द्वितीयोऽपि न चमत्कारकारकः तेषां समुदाये प्रमादोत्पत्तेश्चिरकालीनत्वात्प्रमादेनाऽवहनं च न निह्नवतायां प्रयोजकम्। आद्ये तु तान्

मन्यान् दिदृक्षुरस्मि। यदि चैतेऽपि निह्नवास्तदा मूलशासनस्य शाखाः के कुत्र वसन्ति? इत्यादितर्कविषयत्वेन प्रवचनपरीक्षागतमप्येतत्स्थलद्वयं चिन्त्यतया प्रतिभासते। केचित्तु प्रतिपदं पूत्कुर्वाणास्सन्ति यदेते निह्नवा इति। किञ्च "होइ मंगलम्" इति पाठोऽपि न तेषां निह्नवतामावहति, वज्रस्वामिनः प्रागेव तेषां शाखाया पृथक् पतितत्वात्; नागपुरीयादितपापक्षीयानां पञ्चदशलोगस्सशब्दयोत्सर्गाऽभाववत्। "काले विणए बहुमाणे उवहाणे" इत्यादिपाठोऽपि शास्त्राणामखण्ड एव तैः पाठितो दृश्यते, ततो यदि ताता पक्षकोटितां नीत्वा प्रसादयन्ति तदा शिशुरनुगृहीतो भवतीति प्रश्नोऽत्रोत्तरम्—ऊकेशगच्छीयानां देशनिह्नवत्वं के पूत्कुर्वन्ति तन्न ज्ञायते। अस्माभिस्तु द्वादशजल्पपट्टे लिखितानामेव निह्नवत्वं श्रद्धीयते नान्येषाम्। द्वादशजल्पपट्टस्तु श्रीमतां प्राक् प्रहितोऽस्ति। किञ्च प्रवचनपरीक्षास्तत्कमेतदाश्रितमन्यच्च किञ्चिच्चर्च्यपदमन्यग्रन्थाऽननुयायि तद्विचार्यमेवास्ति। तथा नामग्राहनिर्णयज्ञापनं विना यत्र तत्र निह्नवत्ववादिनां प्रतीकारोऽपि कथं क्रियते? इति ॥२-१६३॥

तथा—"तेसु णं पतिरामतेसु अंकुसेसु चत्तारि कुंभिका मुत्तादामा पन्नत्ता"। इत्यत्र कुम्भप्रमाणत्वं मौक्तिकानामुक्तम्। कुम्भप्रमाणं चानेन क्रमेण—'दो असईओ पसई, दो पसईओ अ सेईआ होइ, चत्तारि सेईआओ कुलओ, चत्तारि कुलया पत्थो, चत्तारि पत्था आढय, सट्ठि आढगाणं जहन्नए कुंभे, असिई आढगाणं मज्झिमए कुंभे, आढयाणं सयं उक्कोसए कुंभे, अट्ठेव आढयसयाणि वाहे" इति तन्दुलवैतालिकप्रकीर्णके। यद्येकस्यां प्रसृत्यां १ सेरः संभाव्यते तदा सेतिकायां २ सेरौ, कुडपे च १० से०, प्रस्थे च १ मणम्,

आढके च ४ म०, आढकानां षष्ट्या च २४० मणप्रमाणो जघन्यः कुम्भो भवति। ३२० मणप्रमाणो मध्यमः। ४०० मणप्रमाण उत्कृष्टो भवति। अनया रीत्या विचार्यमाणं ६४ मणप्रमाणत्वं मौक्तिकानां कथमसङ्गतीभवति?। अथैवमप्याधिक्येव समजनि न त्वभिप्रेतप्रमाणत्वमिति चेत् सत्यम्, सूत्रस्वगाया विचित्राभिप्रायत्वेन न जानीमः पृथक्त्ववत् किमपि कुम्भप्रमाणमत्र विवक्षितम्, कुटपमानस्य नैकधा श्रवणात्। तथाहि-"हस्तोन्मितैर्विस्तृतिदैर्घ्यपिण्डैर्यद्द्वादशास्रं घनहस्तसंज्ञम्। धान्यादिके यद् घनहस्तमानं, शास्त्रोदिता मागधखारिका सा ॥१॥ द्रोणस्तु खार्याः खलु षोडशांशः, स्यादाढको द्रोणचतुर्थभागः। प्रस्थश्चतुर्थश्च तथाऽऽढकस्य प्रस्थाङ्घ्रिराद्यैः कुडवः प्रदिष्टः" ॥२॥ इति लीलावत्याम्। एतच्चात्यल्पमेव, साम्प्रतं तु नेपालदेशे ३६ पइसातुलितं कुटप व्यवहरन्ति, तद्गणनायां च चतुष्षष्टिमणानि किञ्चिन्न्यूनानि भवन्ति। ततोऽनैतिह्यमेव स्वीकार्यं सिद्धान्ते व्यक्तमानाऽनुपलम्भात्, अनुत्तरविमानगतस्य जीवस्य सङ्ख्येयभवोक्तौ २४ भवरूपैतिह्यवत्। किञ्च व्यक्तमानाक्षराण्यपि जीर्णपत्रेषु दृश्यन्ते, तद्यथा-"सर्वार्थसिद्धविमाने एकं मुक्ताफलं ६४ मणप्रमाणम्, वलयाकारेण ४ मुक्ताफलानि ३२ मणप्रमाणानि, एवं तदर्धमानानि ८ वलयानि यदा वातलहर्या पृथग् भूत्वा मुख्यमुक्ताफले आस्फालयन्ति तदा तद्विमानं मधुरस्वरनादाऽद्वैतमयं जायते" इत्यादि। सिद्धप्राभृतप्रकीर्णके एवमेव पण्डितपद्मविजयगणिपार्श्वेऽपि। न चैतन्मानं न श्रद्धीयते, तादृशग्रन्थविच्छित्तावपि सिद्धान्तानुगतस्वार्थस्याश्रद्धाने मिथ्यात्वापातात्। न चैतन्मानं सर्वार्थसिद्धे भविष्यति न नन्दीश्वरादिविति वाच्यम्, पाठस्य समानत्वात्। पाठसाम्ये च न्यूनाधिकत्वं न दोषावहम्, "अड्ढमाण राइंदिआणं" इति-

पाठवत् । एवं सत्यपि कथं केचित्तद्वादिनां निह्नवतां पूत्कुर्वन्ति ? कथं च ताता प्रसादयन्ति ? इति जिज्ञासायां ताता एव प्रमाणमिति प्रश्नोऽत्रोत्तरम्—सर्वार्थसिद्धादिविमानेषु मुक्ताफलमानमाश्रित्य वृद्धवादानुसारेण छूटकपत्राक्षरानुसारेण भुवनभानुकेवलिचरित्रानुसारेण च चतुःषष्टिमणप्रमाणत्वमवसीयते । किञ्च कुम्भानां माने वैचित्र्यमुपलभ्यते तेनात्रार्थे नाग्रहमतिर्विधेयेति ॥३-१६४॥

## अथ पण्डितजिनदासगणिकृत—
## प्रश्नास्तत्प्रतिवचांसि च यथा—

नव नारदाः कुत्र कस्य वा पार्श्वे सम्यक्त्वं प्राप्ताः ? कियन्तश्च स्वर्गेऽपवर्गे च कियन्तो गताः ? इति प्रश्नोऽत्रोत्तरम्—नारदगत्यादिकमाश्रित्य कश्चित्स्वर्गे कश्चिन्मोक्षे, परं सर्वेषां व्यक्तिः क्वचिदपि न दृश्यत इत्यवसेयम् ? ॥१-१६५॥

तथा—जिनप्रतिमानामुष्णलाक्षादिरसेन चक्षुरादिसंयोजने आशातना भवति न वा ? इति प्रश्नोऽत्रोत्तरम्—जिनप्रतिमानां चक्षुरादिसंयोजनमाश्रित्य ये निपुणाः श्राद्धास्सन्ति ते रालतैले मेलयित्वा भूयो वर्तयित्वा तद्रसेन चक्षुरादि संयोजयन्ति न तूष्णलाक्षारसेन, तथा करणे आशातनादोषप्रसङ्गादिति ॥२-१६६॥

तथा—आश्विनचैत्रमासाऽस्वाध्यायिके सत्यष्टमीनवमीदिनत्रयमुपधानमध्ये आयाति न वा ? इतिप्रश्नोऽत्रोत्तरम्—आश्विनचैत्रमासाऽस्वाध्यायिकदिनत्रयमुपधानतपोविशेषेषु लेख्यके नाऽऽयातीति बोध्यम् ॥३-१६७॥

तथा—मालापरिधापननन्दिः कदा मण्ड्यते ? इति प्रश्नोऽत्रोत्तरम्—मालापरिधापननन्दिमाश्रित्य तन्नन्दिविधानं विजयदशमीदिनानन्तरं शुध्यतीति वृद्धवादः ॥४-१६८॥

तथा—भरतक्षेत्रचक्री प्रथमं कं खण्डं साधयति ? इति क्रमः प्रसाद्य इति प्रश्नोऽत्रोत्तरम्—चक्री मध्यमखण्डं साधयित्वा सेनानीरत्नेन सिन्धुखण्डं साधयति। तदनु गुफाप्रवेशेन वैताढ्यमतिक्रम्य मध्यमखण्डं साधयति। तेनैव तत्रस्थं सिन्धुखण्डं साधयित्वाऽत्राऽऽयागतो गङ्गाखण्डं तेनैव साधयित्वा राजधानीमन्वागच्छतीति क्रमः ॥५-१६९॥

## अथ पण्डितवेलर्षिगणिकृत-
## प्रश्नास्तत्प्रतिवचांसि च यथा-

पार्श्वस्थदीक्षितात्साधोर्गणश्चलतीति कुत्रोक्तमस्ति ? इति प्रश्नोऽत्रोत्तरम्—संविग्न आचार्यादिः संविग्नगीतार्थाद्यभावे संविग्नभक्तपार्श्वस्थादिपार्श्वे यदा प्रायश्चित्तमङ्गीकरोति तदा पुनर्व्रतारोपरूपं प्रायश्चित्तं कश्चित्प्रतिपद्यते, एवं छेदग्रन्थोक्तानुसारेण समाधानमवसेयम् ॥१-१७०॥

तथा—देशपार्श्वस्थो वन्द्यः क्वाऽस्ति ? इति प्रश्नोऽत्रोत्तरम्—पूर्वोक्ताक्षरानुसारेणाऽऽचार्यादिः प्रायश्चित्तं प्रतिपद्यमानो द्वादशावर्तवन्दनं पार्श्वस्थादेः करोति। कारणान्तरे तु सर्वपार्श्वस्थादेरपि वृद्धवन्दनादि करोतीत्यावश्यकनिर्युक्त्यादौ कथितमस्ति ॥२-१७१॥

तथा—नाणकपूजा गुरोः क्वाऽस्ति ? इति प्रश्नोऽत्रोत्तरम्—"कुमारपालेन राज्ञा श्रीहेमचार्याणां पूजा सुवर्णकमलैः प्रत्यह क्रियते स्म" इति कुमारपालप्रबन्धादौ प्रोक्तमस्ति तदनु-

सारेण नाणकपूजाऽपि साम्प्रत क्रियमाणा दृश्यते, तेषामपि धातुमयत्वात् । तथाऽत्र वृद्धवादाऽपि–"श्रीसुमतिसाधुसूरीणां वारके मण्डपाचलदुर्गे मलिकश्रीमाफराभिधानेन सुवर्णटङ्कैः गीतार्थाना पूजा कृता' इति ॥३-१७२॥

## अथ पुनः पण्डितविवेकहर्षगणिकृत-
## प्रश्नास्तत्प्रतिवचांसि च यथा—

"उसमेणं अरहा कोसलिए चउरासीइपुव्वसयसहस्साइं सव्वाउय पालइत्ता सिद्धे बुद्धे जाव सव्वदुक्खप्पहीणे, एवं भरहो बाहुबली बंभी सुन्दरी" इति समवायाङ्गसूत्रालापकेन "उसहो उसहस्स सुआ' इत्यादिगाथाया विरोधापत्ति' सञ्जायते, यतः वृषभदेवस्य षट्लक्षपूर्वातिक्रमे सजातस्य चतुरशीतिलक्षपूर्वायुषाऽपि बाहुबलेर्भगवता सार्धं निर्वाणमुक्तमिति न चैतस्य विरोधस्याश्चर्ये एव पात इति वाच्यम्, आश्चर्यत्वं त्वत्र एवावगाहनापन्नानामष्टोत्तरशतसङ्ख्याकानामेकसमयावच्छेदेन सिद्धत्वेचेति प्रश्नोऽत्रोत्तरम्–बाहुबले समवायाङ्गानुसारेण चतुरशीतिलक्षपूर्वायुष्कतासद्भावेऽपि ग्रन्थान्तरे यद् वृषभस्वामिना सम निर्वाणमुक्तमस्ति तत्र विरुद्धम्, यत एतस्यायुषोऽपवर्तनस्यापि "अट्ठसयसिद्धा" इत्यस्मिन्नेवाश्चर्येऽन्तर्भावात् । न चायमन्तभावोऽनुपपन्न इति वाच्यम्, 'हरिवंसकुलुप्पत्ति" इत्यस्मिन्नाश्चर्ये युगलिन आयुषोऽपवर्तन नरकगमनं चान्तर्भवतीति ॥१-१७३॥

तथा—"अंतोमुहुत्तमित्तं पि" इतिगाथया सम्यग्दृष्टेर्नूनार्धपुद्गलपरावर्त संसार उत्कर्षतः प्रतिपादितोऽस्ति, 'जा अ विरिआयई सो भविओ अभविओ वा' इत्यादिवृद्धाद्यर्थक्षरानुसारेण तु सम्यग्दृष्टे क्रियावादिनो मिथ्यादृष्टेर्

त्कपतो न्यूनपुद्गलपरावर्त्तः संसारः, परं सोऽप्यागमान्तरानुसारेण न्यूनार्धपुद्गलरूपोऽवसीयते, अत्र सम्यग्दृष्टेः क्रियावादिमिथ्यादृष्टेश्च कथं संसारसाम्यम्? इति प्रश्नोऽत्रोत्तरम्—यद्यप्यापातमात्रेण साम्यमुक्तमस्ति तथापि सम्यग्दृष्टेः कस्यचिदाशातनाबहुलस्य विराधकस्यैवैतावान् संसारो भवति नान्यस्य। क्रियावादिमिथ्यादृष्टिसमुदाये तु कस्यचिल्लघुकर्मण एवैकावतारित्वसम्भव इति कथं साम्यशङ्का? इति प्रतिभाति। तत्त्वं तु तत्त्वविद्वेत्तीति ॥२-१७४॥

तथा—कस्यचिज्जानतोऽभिनिविष्टस्य संसारवृद्धिहेतुः कर्मबन्धो भूयान्, उताभिनिविष्टस्य तन्मार्गानुयायिनो वाऽजानतः? इति प्रश्नोऽत्रोत्तरम्—व्यवहारेण जानतः कर्मबन्धो भूयानित्यवसीयते ॥३-१७५॥

तथा—कश्चिदजानन् हिंसादिना कर्म चिनोति कश्चित्तु जानन् इत्यनयोः कस्य कर्मबन्धदार्ढ्यम्? इति प्रश्नोऽत्रोत्तरम्—उभयोरपि क्रोधादिपरिणामस्य दृढत्वे कर्मबन्धस्य दार्ढ्यम्, मन्दत्वे तु मन्दत्वं भवति ॥४-१७६॥

## अथ पुनर्महोपाध्यायश्रीसुमतिविजयगणि-शिष्यपण्डितगुणविजयगणिकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

दक्षिणभरतार्धे श्रीऋषभ इव उत्तरभरतार्धे कोऽपि सकलव्यवहारकर्ता समस्ति न वा?। आद्ये स नामग्राहं प्रसाद्यः, अन्त्ये च कथं तत्र तद्व्यवहारप्रवृत्तिः? इति प्रश्नोऽत्रोत्तरम्—उत्तरभरतार्धेऽपि जातिस्मरणादिभाक् क्षेत्राधिष्ठायकदेवो वा कश्चित्तत्र नीतिप्रणेता, कालानुभावतः स्वतोऽपि वा कियन्नैपुण्यं जायत इति ॥१-१७७॥

तथा—सौधर्मादिषु प्रतिदेवमुपपातशय्याभेदोऽथवैकस्यामेवाऽनेकेषामुपपातः ? इति प्रश्नोऽत्रोत्तरम्—महर्धिकसुराणामुपपातशय्या भिन्ना, अन्येषां त्वभिन्नाऽपीति संभाव्यते; तथाविधव्यक्ताक्षराणां दर्शनस्यास्मरणादिति ॥२ १७८॥

तथा—देशावकाशिकव्रते केनचिद्योजनशतं रक्षितम्, किञ्चित्कार्यमापतितं, तदूर्ध्वं लेखप्रेषणे व्रतमालिन्यं न वा ? इति प्रश्नोऽत्रोत्तरम्—नियमितक्षेत्रादूर्ध्वं लेखप्रेषणे व्रतमालिन्यं भवतीति ज्ञायते, योगशास्त्रवृत्त्यादौ तथैव दर्शनादिति ।३-१७९।

तथा—उपधानवाहिनः श्राद्धादेरकालसंज्ञायां जलशौचादिविधि किं निरयपि स्यान्न वा ? इति प्रश्नोऽत्रोत्तरम्—स्वकीयादिनाऽऽनीतेनोष्णोदकेन शौचादिविधानं युक्तिमदिति ॥४-१८०॥

तथा—ऋषभस्वामी अष्टाग्रशतेनैकस्मिन्नेव समये सिद्ध इदं चाश्चर्यम्, तत्र बाहुबल्याद्यायुराश्रित्य का गतिः ? इद च तत्प्रतिपादकग्रन्थनामप्रसादनपूर्वं निर्णयकारि प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—"अट्ठसयसिद्धा" अस्मिन्नेवाश्चर्ये बाहुबलेरायुषोऽपवर्तनमन्तर्भवति, यथा "हरिवंसकुलुप्पत्ति" इत्याश्चर्ये हरिवर्षक्षेत्रानीतस्य युगलस्यायुरपवर्तनम्, शरीरलघुकरणम्, नरकगमनादि चाऽन्तर्भवतीति ।५-१८१॥

तथा—येऽष्टात्मप्रदेशा मध्यस्था एव सन्ति तेऽपि किं कर्मपरमाणुवर्गणाभिर्लिप्ताः सन्ति तदनालिङ्गिता एव वा ? इति प्रश्नोऽत्रोत्तरम्—कर्मणाऽनावृता अष्टौ प्रदेशा इति विज्ञायते । "स्पृश्यन्ते कर्मणा तेऽपि, प्रदेशा आत्मनो यदि । तदा जीवो जगत्यस्मिन्नजीवत्वमवाप्नुयात्" ॥१॥ इति ज्ञानदीपिकायामुक्तत्वादिति ॥६-१८२॥

तथा—मेघकुमारस्य पाश्चात्यभवे हस्तिरूपस्य यन्नाम दृश्यते तत्केन दत्तम्? इति प्रश्नोऽत्रोत्तरम्–तत्प्रवेतनितम्यादिनिर्यालियनेचरैस्तन्नाम दत्तमिति श्रीज्ञाताधर्मकथासूत्रे उक्तमस्तीति बोध्यम् ॥७-१८३॥

तथा—चतुर्दशगुणस्थानकेषु समारोहन् जन्तुः किं क्रमेण एकादिव्यवधानेन वा चतुर्दशं गुणस्थानं स्पृशति? इति प्रश्नोऽत्रोत्तरम्–अनादिमिथ्यादृष्टिस्तावच्चतुर्थं गुणस्थानकं याति न तु द्वितीयतृतीये, तदनु यद्युपशमश्रेणिमारभते तदैकादशं यावत्क्रमेण याति, यदि च क्षपकस्तदैकादशं विहाय चतुर्दशं यावत्क्रमेणेति विज्ञायते। विशेषस्तु विशेषावबोधकशास्त्रगम्य इति ॥८-१८४॥

तथा—औपपातिकसूत्रे साधुवर्णनाधिकारे 'पंताहारे' इत्यस्य वृत्तौ पर्युषितं वल्लचणकादीति व्याख्यातमस्ति, तथा च पर्युषितपूपिकाभक्षणादराणां साध्वादीनां तद्विषयदोषोद्घट्टनं कथं युक्तिमत्? इति प्रश्नोऽत्रोत्तरम्–"निप्पावचणकमाई अंतं पंतं च होइ वावन्नं" इति बृहत्कल्पभाष्ये जिनकल्पिकाधिकारे। एतद्वृत्तौ च वावन्नशब्देन विनष्टमिति व्याख्यातमस्ति। तत्– नु तत्त्वविद्वेद्यम्। आत्मनां तु पर्युषितस्याग्रहणेऽविच्छिन्नवृद्धपरम्पराऽऽराधनं संसक्तिसद्भावे तद्दोषवर्जनं च गुणायैवेति बोध्यम् ॥९-१८५॥

तथा—उपाङ्गानि किं गणधरविरचितानि? अन्यथा वा? तथाऽङ्गप्रणयनकालेऽन्यदा वा तन्निर्माणम्? इति प्रश्नोऽत्रोत्तरम्– उपाङ्गानि स्थविराः कुर्वन्ति तीर्थङ्करे विद्यमानेऽविद्यमानेऽपीत्यङ्गप्रणयनकाले एव तेषां निर्माणमिति नैकान्त

इति नन्दीसूत्रवृत्तौ व्यक्त्योक्तमस्ति तेन विशेषतस्ततोऽवसेयमिति ॥१०-१८६॥

## अथ गणिजयवन्तशिष्य-पण्डितदेवविजय गणिकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

लोकान्तिकदेवा एकावतारिणोऽष्टावतारिणो वा? इति प्रश्नोऽत्रोत्तरम्—अष्टावतारिण[1] इति ज्ञातमस्ति ॥१-१८७॥

तथा—सङ्गमकासुर सुरेशेन निष्काशित स भवधारणीयेन शरीरेण मेरुचूलायां जगामोत्तरवैक्रियेण वा? इति प्रश्नोऽत्रोत्तरम्—मौलेनेति विज्ञायते, उत्तरवैक्रियस्यैतावत्कालमवस्थानाऽभावात्। यत्तु मौलं शरीरं विमानाद्बहिर्न निर्गच्छतीति यचस्तत्प्रायिकमिति बोध्यम् ॥२-१८८॥

तथा—कृतसर्वविकृतिप्रत्याख्यानस्य श्राद्धस्य निर्विकृतिप्रत्याख्याने एकाशनकवद् द्व्यासनकमपि कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्—कल्पते इति ज्ञातव्यम् ॥३ १८९॥

तथा—परमाधार्मिका भव्या एव इति प्रघोषः सत्योऽसत्यो वा? इति प्रश्नोऽत्रोत्तरम्—असत्य एवेति ज्ञेयम्, उभयथापि तेषामविरोधात्। न च जन्मान्तरीयकृतदुष्टनोक्तिपूर्वक ते नारकान् कदर्थयन्तीत्यभव्यानां तत् कथं संगच्छते? इति वाच्यम्, यतस्तेऽपि स्वर्गकामास्तपस्यां कुर्वाणा आगमे श्रूयन्ते[2] इति ॥४-१९०॥

---

१ "लोकस्य-ब्रह्मलोकस्यान्त-समीपं कृष्णराजीलक्षण क्षेत्र निवासो येषा ते लोकान्ते वा औदयिकभावलोकावगाने भवा अनन्तरभवे मुक्तिगमनादिति लोकान्तिकाः॥" इति स्थानांगतृतीयस्थानप्रथमोद्देशकस्य वृत्तौ, प्रवचनसारोद्धारे तु सप्ताष्टभवान्ता लोकान्तिका कथिता।

२ 'अभव्या परमाधार्मिकपदं न प्राप्नुवन्ति' इति अर्थेत संबोधप्रकरणभव्यकुलकादौ पूर्वसूरिपुङ्गवै प्रोक्त।

तथा—श्रीवीरेण चक्रित्वप्राप्तिपुण्यं क्व भवेऽर्जितम्? इति प्रश्नोऽत्रोत्तरम्–अत्र निर्णयो ग्रन्थे दृष्टो नास्ति ॥५-१९१॥

तथा—तीर्थङ्करजीवानां नरके परमाधार्मिककृता पीडा भवति न वा? इति प्रश्नोऽत्रोत्तरम्–अत्राप्येकान्तेन ज्ञातं नास्ति ॥६-१९२॥

तथा—देशविरतौ चक्रिपदबन्धो भवति न वा? इति प्रश्नोऽत्रोत्तरम्–अत्राप्येकान्तो ज्ञातो नास्तीति ॥७-१९३॥

तथा—कृष्णस्य भवपञ्चकं नेमिचरित्रे, क्षायिकसम्यक्त्ववतां चोत्कर्षतो भवचतुष्टयमेवोक्तमस्तीति कथं सङ्गतिः? इति प्रश्नोऽत्रोत्तरम्–कृष्णस्य भवपञ्चकमाश्रित्य मतान्तरमवसीयते, यतो धर्मोपदेशमालावृत्तौ श्रीनेमिना श्रीकृष्णस्य विषादकरणप्रस्तावे कथितम्, यथा–"मा सोय तुमं, तओ उव्वट्टित्ता इहेव भारहे वासे सयदुवारे नयरे जियसत्तुस्स पुत्तो इक्कारसमो अममो नाम तित्थयरो होहिसि।" एतदक्षरानुसारेण भवत्रयमेवायाति। तत्त्वं पुनः केवलिनो विदन्तीति ॥८-१९४॥

तथा–श्रीमल्लिजिनस्य ज्ञाताधर्मकथाङ्गे दीक्षादिने केवलज्ञानोत्पत्तिः, आवश्यकनिर्युक्तौ त्वहोरात्रद्छाद्मस्थ्यकालः कथितोऽस्ति तत्कथं घटते? इति प्रश्नोऽत्रोत्तरम्–अत्र ज्ञाताधर्मकथाङ्गवृत्त्येकदेशो यथा–"यत्र दिवसे दीक्षां जग्राह तस्यैव पौषमासशुद्धैकादशीलक्षणस्य प्रत्यपराह्णकालसमये ५ भागे।" इदमेवावश्यके पूर्वाह्णे मार्गशीर्षे च श्रूयते, यदाह–"तेवीसाए णाणं उप्पण्णं जिणवराण पुव्वण्हे त्ति'। तथा 'मग्गसिरसुद्धएगारसीए मल्लिस्स अस्सिणी जोगो त्ति'।"

तथा तत्रैवास्याहोरात्रं यावच्छाद्मस्थ्यपर्यायः श्रूयते। तदत्राभिप्रायं बहुश्रुता विदन्तीति ॥९-१९५॥

तथा—पौषधव्रत्यो नार्योऽध्वनि देवगुरुगुणगानं कुर्वन्तीति क्वास्ति? इति प्रश्नोऽत्रोत्तरम्—नेयं शास्त्रोक्ता रीतिरिति बोध्यम् ॥१०-१९६॥

तथा—रात्रौ पौरुष्याः पश्चादुच्चस्वरेण न वक्तव्यमिति वृद्धवचः श्रुत्वापि श्राद्धा रात्रिजागरं कुर्वन्तीति क्वास्ति? इति प्रश्नोऽत्रोत्तरम्—तपस्यादिमहे तत्करणस्य दृश्यमानत्वात्परम्परैव शरणमवसीयत इति ॥११-१९७॥

## अथ पण्डितविष्णर्षिगणिकृत-
## प्रश्नास्तत्प्रतिवचांसि च यथा—

नवक्षणैः कल्पसूत्रं वाच्यते, कैश्चिदधिकैरपि वाच्यते, तदक्षराणि क्व सन्ति? इति प्रश्नोऽत्रोत्तरम्—नवक्षणः श्रीकल्पसूत्रं वाच्यते परम्परातः, अन्तर्वाच्यमध्ये नवक्षणविधानाक्षरसद्भावाच्च। अधिकव्याख्यानैस्तद्वाचनं तु तथाविधसुविहितगच्छपरम्परानुसारि अक्षरानुसारि च नावसीयत इति ॥१-१९८॥

तथा—राजगृहे नगरे गुणशिलाख्ये चैत्ये श्रीमहावीरेण श्रीकल्पसूत्रं प्रकाशितमिति कल्पाध्ययने उक्तमस्ति, कल्पसूत्रवृत्त्यादौ तु श्रीभद्रबाहुस्वामिभिः प्रणीतमिति कथं सङ्गच्छते? इति प्रश्नोऽत्रोत्तरम्—श्रीमहावीरेण कल्पसूत्रमर्थतः प्रकाशितं सद् गणधरैः सूत्रतो नियद्धम्, तदनु श्रीभद्रबाहुस्वामिभिर्नवमपूर्वाद् दशाश्रुतस्कन्धमुद्धरद्भिस्तदष्टमाध्ययनरूपत्वेन श्रीकल्पसूत्रमप्युद्धृतमिति न किञ्चिदनुपपन्नमिति ॥२-१९९॥

तथा—श्रीआदिनाथस्य वारके तालफलेन युगलिकदारको मृतः, युगलिनां चाकालमरणं न भवतीति कथं घटते ? इति प्रश्नोऽत्रोत्तरम्—पूर्वकोटयधिकायुषो युगलिनो न्यूनायुषि न म्रियन्ते । ततः श्रीआदिनाथस्य वारके तालफलेन मृतस्य युगलिनः पूर्वकोटयधिकमायुर्नाभूदिति ,सङ्गच्छत इति ॥३-२००॥

तथा—श्रीशत्रुञ्जयस्योपरि पञ्चपाण्डवैः समं साधूनां विंशतिकोटयः सिद्धा इति श्रीशत्रुञ्जयमाहात्म्यादौ प्रोक्तमस्ति, सा कोटिर्विंशतिरूपा शतलक्षरूपा वा ? इति प्रश्नोऽत्रोत्तरम्—शतलक्षरूपा कोटिरवसीयते न तु विंशतिरूपेति बोध्यम् ॥ ॥४-२०१॥

तथा—ज्ञाताधर्मकथाङ्गनवमाध्ययने रत्नद्वीपदेवी मौलशरीरेण लवणसमुद्रशोधनार्थं गतेत्युक्तमस्ति, परं मौलशरीरेणान्यत्र गमनं कथं सङ्गच्छते ? इति प्रश्नोऽत्रोत्तरम्—ज्ञातामध्ये रत्नद्वीपदेवी मौलशरीरेण समुद्रशोधनार्थं गतास्ति, परं तस्या मौलशरीरेण गमनप्रतिषेधो ज्ञातो नास्तीति ॥५-२०२॥

तथा—तीर्थङ्करतामन्तरेषु साध्वादीनां विच्छेदे सति यदि कस्यचित्स्वयंबुद्धादेः केवलज्ञानमुत्पद्यते तदा स धर्मोपदेशं दत्ते न वा ? इति प्रश्नोऽत्रोत्तरम्—प्रत्येकबुद्धादयः सर्वथोपदेशं न ददतीति निषेधः सिद्धान्ते दृष्टो नास्तीति बोध्यमिति ॥६-२०३॥

. तथा—भरतक्षेत्रसत्कषट्खण्डनामानि प्रसाद्यानीति प्रश्नोऽत्रोत्तरम्—भरतस्य दक्षिणार्द्धे गङ्गासिन्धुनद्योरन्तरवर्तिनो देशस्य मध्यखण्डमित्यभिधानम् १ । गङ्गातः पूर्वदिग्वर्तिनो

देशस्य गङ्गानिष्कुटखण्डमित्यभिधानम् २। सिन्धुनदीतः पश्चिमदिग्वर्तिनो देशस्य सिन्धुनिष्कुटखण्डमित्यभिधानम् ३। एवमुत्तरार्धे चैतान्येव त्रीणि नामानि ज्ञातव्यानि ॥७-२०४॥

तथा—"जइआ होई पुच्छा, जिणाण मग्गम्मि उत्तरं तइआ। इक्कस्स निगोअस्स य, अणतभागो उ सिद्धिगओ" ॥१॥ एतद्गाथाया अर्थो युक्तिग्राह्य आज्ञाग्राह्यो वा ? इति प्रश्नोऽत्रोत्तरम्—"जइआ होई पुच्छा०" एतद्गाथाया अर्थो मुख्यवृत्त्या आज्ञाग्राह्यो वर्तते। युक्तिरपि तत्रेदृशी वर्तते, तथाहि—यद्यनादिकालसिद्धा एकनिगोदस्यानन्ततमे भागे कथितास्तदा पुनरनन्तकाले गते एकनिगोदानन्ततमभागत्वं सिद्धजीवानां कथं टलति ?। तथा दृष्टान्तोऽप्यस्ति यथा-जम्बूद्वीपादिगता लक्षशो नद्यः प्रतिवर्षं कचवरादि प्रवाह्य समुद्रमध्ये त्यक्त्वा यान्ति तथापि समुद्रमध्ये स्थली न भवति जम्बूद्वीपादिमध्ये गर्ता वा न भवति, इति दृष्टान्तेन सिद्धिक्षेत्रं जीवैर्न भ्रियते संसारो वा जीवै रिक्तो न क्रियत इति ॥८-२०५॥

तथा—श्रीमहावीरस्य द्वासप्ततिवर्षप्रमाणमायुरुक्तमस्ति, तत्र जन्म चैत्रशुक्लत्रयोदश्यां निर्वाणं तु कार्तिकामावास्यामेतत्कथं सङ्गच्छते ? इति प्रश्नोऽत्रोत्तरम्—आषाढसितषष्ठीलक्षणगर्भोत्पत्तिदिनादारभ्य गणने द्वासप्ततिरेव वर्षाणि जायन्ते। कियन्न्यूनाधिकमासादिगणना त्वल्पत्वेन वर्षचूलातया निवक्षणाद्य कृतेति संभाव्यते। निर्णयस्तु व्यक्तया ग्रन्थाक्षरदर्शनं विना कथं भवतीति ? ॥९-२०६॥

तथा—श्रीमहावीरस्य मातापितरौ द्वादशे तुर्ये वा देवलोके गतौ ? इति प्रश्नोऽत्रोत्तरम्—श्रीमहावीरस्य मातापितरावाचाराङ्गमध्ये द्वादशदेवलोके, प्रवचनसारोद्धारे च तुर्ये गतौ प्रतिपादितौ स्तस्तन्निर्णयस्तु केवलिगम्य इति ॥१०-२०७॥

तथा—हरिनैगमेषिणा श्रीमहावीरस्य गर्भापहारः केन द्वारेण कृतस्त्रिशलाकुक्षौ च केन द्वारेण मोचनं कृतम् ? इति प्रश्नोऽत्रोत्तरम्—हरीनैगमेषी श्रीमहावीरं देवानन्दायोनिद्वारेण कर्षयित्वा त्रिशलागर्भाशये छविच्छेदं विधाय मुक्तवान्, न तु योनिद्वारेणेत्यक्षराणि श्रीभगवतीसूत्रमध्ये सन्तीति ॥११-२०८॥

तथा—स्थूलभद्रस्य भ्राता श्रीयको मृत्वा क्व गतः ? इति प्रश्नोऽत्रोत्तरम्—श्रीयकः परिशिष्टपर्वणि सामान्यतो देवलोके गतोऽभिहितोऽस्तीति ॥१२-२०९॥

तथा—साध्वी श्राद्धानामग्रे व्याख्यानं न करोतीत्यक्षराणि कुत्र ग्रन्थे सन्ति ? इति प्रश्नोऽत्रोत्तरम्—दशवैकालिकवृत्तिप्रमुखग्रन्थमध्ये यती केवलश्राद्धीसभाग्रे व्याख्यानं न करोति रागहेतुत्वादित्युक्तमस्ति । एतदनुसारेण साध्व्यपि केवलश्राद्धसभाग्रे व्याख्यानं न करोति रागहेतुत्वादिति ज्ञायते इति ॥१३-२१०॥

तथा—त्रीन्द्रियेलिका स्फिटित्वा चतुरिन्द्रियभ्रमरी कथं भवति ? इति प्रश्नोऽत्रोत्तरम्—इलिकाकलेवरमध्ये इलिकाजीवोऽपरो वा भ्रमरीत्वेनमुत्पद्यत इति ॥१४-२११॥

तथा—केवलोर्णिकाशरीर संपर्के संमूर्च्छजजीवानामुत्पत्तिरस्ति न वा ? इति प्रश्नोऽत्रोत्तरम्—केवलोर्णिका शरीरसंपर्के वस्त्रापेक्षया षट्पयो बहव उत्पद्यन्ते इत्यक्षराणि च्छेदग्रन्थे स्मरन्ति नेतराणीति ॥१५-२१२॥

तथा—महाविदेहे श्रीसीमन्धरस्वामिस्थाने यस्तीर्थंकर उत्पत्स्यते तस्य किं नाम ? तथा तत्र वस्त्रवर्णादिविधिः

कथम् ? । तथा विहरमाणविंशतितीर्थकृतां मातापितृग्रामादिनामानि कुत्र शास्त्रे सन्ति ? इति प्रश्नोऽत्रोत्तरम्—महाविदेहे श्रीसीमन्धरस्वामिस्थाने उत्पत्स्यमानतीर्थङ्करनाम शास्त्रे दृष्टं नास्ति । तथा तत्र वस्त्रवर्णादिविधिरिहत्याजितादिद्वाविंशतितीर्थकृतामनुसारेणेति । तथा विहरमाणविंशतितीर्थकृतां मातापितृग्रामादिनामानि त्रुटितपत्रादौ कथितानि सन्तीति ॥१६–२१३॥

तथा—अष्टापदपर्वते प्रतिमाप्रतिष्ठा केन कृता ? कुत्र वा सा कथिताऽस्ति ? इति प्रश्नोऽत्रोत्तरम्—अष्टापदपर्वते प्रतिमाप्रतिष्ठा श्रीऋषभदेवशिष्येण कृतेति श्रीशत्रुञ्जयमाहात्म्यमध्ये कथितमस्तीति ॥१७–२१४॥

तथा—द्रौपद्या नवनिदानमध्ये किं नामकं निदानं कृतम् ? इति प्रश्नोऽत्रोत्तरम्—श्रीज्ञाताधर्मोक्तद्रौपदीसम्बन्धानुसारेण चतुर्थनिदानसंभवो ज्ञायते, परमध्यवसायविशेषेण तस्य निदानताया अभावाद् द्रौपद्या चारित्रं प्राप्तमिति संभाव्यते । ग्रन्थमध्ये तु दृष्टं नास्ति यदनयाऽमुकं निदानं कृतमिति ॥१८–२१५॥

तथा—शाश्वतो मेरुः श्रीमहावीरेण कथं चालितः ? कुत्र वा कथितोऽस्ति ? इति प्रश्नोऽत्रोत्तरम्—यथा शाश्वत्या रत्नप्रभाया देवानुभावेन स्वभावेन वा प्रकम्पो जायते तथा श्रीवीरचरणाङ्गुष्ठबलानुभावेन शाश्वतमेरोरपि प्रकम्पो बोध्य इति । एतदक्षराणि श्रीवीरचरित्रप्रमुखग्रन्थमध्ये सन्तीति ॥ १९–२१६॥

तथा—पञ्चदशशततापसकृतां गौतमस्वामिना परमान्नेन पारणा कारिता तत्र लब्धिपरमान्नमदत्तमिति साधूनां कथं कल्पते ? इति प्रश्नोऽत्रोत्तरम्—एकोऽपि परमान्नपतद्ग्रहोऽ-

क्षीणमहानसलब्धिप्रभावेणैव सर्वेषां प्राप्त इत्यत्रादत्तं किमपि ज्ञातं नास्तीति बोध्यमिति ॥२०-२१७॥

### अथ पण्डितकीर्तिहर्षगणिकृतप्रश्ना-स्तत्प्रतिवचांसि च यथा—

प्रातः कृतद्विविधाहारैकाशनस्य [ श्राद्धस्य ] निशि द्विविधाहारप्रत्याख्यानं शुध्यति न वा ? इति प्रश्नोऽत्रोत्तरम्—शुध्यतीति बोध्यम् ॥१-२१८॥

तथा—संसारे वसन्नेकजीव इन्द्रत्वं चक्रित्वं वासुदेवत्वं च कति वारॉल्लभते ? इति प्रश्नोऽत्रोत्तरम्-इन्द्रत्वादिलब्धेः संख्या वचाप्यागमे दृष्टा न स्मरतीति ॥२-२१९॥

तथा—संप्रति ये इन्द्रास्सन्ति ते सर्वेऽप्येकावतारिणो न वा ? इति प्रश्नोऽत्रोत्तरम्-संप्रति ये इन्द्रास्सन्ति तेषां मध्ये केचनैकावतारिणो न तु सर्वे इति ॥३-२२०॥

तथा—नारदाः सर्वे तद्भव एव मुक्तिगामिनो भवान्तरे वा ? इति प्रश्नोऽत्रोत्तरम्-नारदाः केचन तद्भवे मोक्षगामिनः केचन भवान्तरेऽपीति ज्ञेयमिति ॥४-२२१॥

### अथ पण्डितनाकर्षिशिष्यगणिसूरविजय-कृतप्रश्नास्तत्प्रतिवचांसि च यथा—

पाक्षिकादिषु ये चतुर्थादि तपो न कुर्वन्ति तेषां किं प्रायश्चित्तमुतानन्तसंसारित्वं भवति ? इति प्रश्नोऽत्रोत्तरम्—पाक्षिकादिषु चतुर्थादि तपः कारणाभावे न कुर्वन्ति तेषां प्रायश्चित्तं भवति, परमनन्तसंसारित्वं न भवतीति ॥१-२२२॥

तथा—रावणस्य हारः परिपाट्यागतो बालत्वे तस्य

देवेन समर्पितो वा ? इति प्रश्नोऽत्रोत्तरम्–रावणस्य हारः परिपाट्यागतोऽस्तीति ॥२-२२३॥

तथा—येन प्रव्रज्यायाः पूर्वं लघुधान्यानि प्रत्याख्यातानि भवन्ति तस्य तद्ग्रहणे तानि कल्पन्ते न वा ? इति प्रश्नोऽत्रोत्तरम्–पूर्वं येन लघुधान्यानि प्रत्याख्यातानि तस्य प्रव्रज्याग्रहणे सत्यन्याऽन्नाऽप्राप्तौ तानि कल्पन्त इति ॥३-२२४॥

तथा—"नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः" इति पूर्वगतं किंवा न ? तथा पूर्वाणि संस्कृतानि प्राकृतानि वा ? इति प्रश्नोऽत्रोत्तरम्–नमोऽर्हत्सिद्धाचार्येत्यादि पूर्वगतं ज्ञेयम् । तथा पूर्वाणि सर्वाणि संस्कृतानि वेदितव्यानि ॥४-२२५॥

तथा—वीरशासने कति प्रत्येकबुद्धाः ? अन्येषां च कियन्तः कियन्तः ? इति प्रश्नोऽत्रोत्तरम्–वीरशासने चतुर्दशसहस्रप्रमाणाः प्रत्येकबुद्धाः । एवं ऋषभादीनां यावन्तो यतयस्तावन्तः प्रत्येकबुद्धा इति ॥५-२२६॥

तथा—पण्डितादिपदस्थानामग्रे देववन्दनं कल्पते न वा ? इति प्रश्नोऽत्रोत्तरम्–प्रतिमानां स्थापनाचार्याणां वाग्रे देववन्दनं कल्पते नान्येषामिति ॥६-२२७॥

तथा—त्रिफलाकृतं प्रासुकपानीयं कुत्र सिद्धान्ते प्रोक्तमस्ति ? इति प्रश्नोऽत्रोत्तरम्–त्रिफलाकृतं प्रासुकमुदकं सिद्धान्ताऽनुमतम् । यतः–"तुंवरफले य पत्ते, रुक्खसिलातुप्पमद्दणादीसु । पासंदणे पवाते, आयवतत्ते वहे अवहे" ॥२०४॥ इयं निशीथभाष्यगाथा । एतच्चूर्णौ "तुंवरफला हरितक्यादयः" इति व्याख्यातमस्तीति ॥७-२२८॥

तथा—एकविंशतिपानीयानां प्रासुकीभवनानन्तरं पुनः

कियता कालेन सचित्तता भवति ? तथा तेषां सर्वेषां सांप्रतं प्रवृत्तिः कथं नास्ति ? इति प्रश्नोऽत्रोत्तरम्—उष्णोदकस्य यथा वर्षादौ प्रहरत्रयादिकः कालः प्रोक्तोऽस्ति तथा प्रासुकोदकधावनादीनामपीति बोध्यम्। तेषां प्रवृत्तिस्तु यथासम्भवं विद्यत इति ॥८-२२९॥

तथा—श्राद्धो गुरुमुखे पौषधमुच्चारयति तदा गमनागमने आलोचयति न वा ? इति प्रश्नोऽत्रोत्तरम्—यदि स्वयं पौषधकरणानन्तरं गमनागमने कृते भवतस्तदा गुरुमुखे पौषधकरणावसरे ते आलोचयति नान्यथेति ॥९-२३०॥

॥ इति सकलसूरिपुरन्दरपरमगुरुतपागच्छाधिराजभट्टारकश्री ५ श्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्य-पण्डितकीर्तिविजयगणिसमुच्चिते तृतीयः प्रकाशः ॥



## अथ चतुर्थः प्रकाशः ।



### अथ जेसलमेरुसङ्घकृत-प्रश्नास्तत्प्रतिवचांसि च यथा—

अपक्वफलं बीजकर्षणादनु घटिकाद्वयानन्तरं प्रासुकं भवति न वा ? इति प्रश्नोऽत्रोत्तरम्—अग्निलवणादिप्रबलसंस्कारे प्रासुकं भवति नान्यथेति ॥१-२३१॥

तथा—नारकाः पाश्चात्यभवशुभाशुभवार्तां कथं जानन्ति ? इति प्रश्नोऽत्रोत्तरम्—देवताकथनादिना जानन्तीति ॥२-२३२॥

तथा—देवद्रव्यभक्षकगृहे जेमनाय गन्तुं कल्पते न वा? इति, गमने वा तज्जेमनकयद्रव्यं देवगृहे मोक्तुमुचितं न वा? इति प्रश्नोऽत्रोत्तरम्–देवद्रव्यभक्षकगृहे यदि कदाचित्परवशतया जेमनाय याति तथापि मनसि सशङ्कत्वं रक्षति न तु निःशङ्को भवति। जेमनद्रव्यस्य देवगृहे मोचने तु विरोधो भवति ततस्तदाश्रित्य दक्षत्वं विलोक्यते, यथाग्रेऽनर्थवृद्धिर्न भवति तथा करोतीति ॥३-२३३॥

तथा—कल्याणकतपसि क्रियमाणे षष्ठाष्टमकरणस्य शक्त्यभावे पाक्षिकादावाचामाम्लादिकं करोति न वा? इति प्रश्नोऽत्रोत्तरम्–षष्ठाष्टमकरणस्य सर्वथा शक्त्यभावे पाक्षिकादिपर्वतिथिष्वाचामाम्लादिकं करोति। कल्याणकतपःप्रवृत्तिस्तु परम्परया दृश्यत इति ॥४-२३४॥

तथा—प्रत्याख्यानकरणावसरे विकृतिद्वयं येन मुत्कलं रक्षितं भवति तस्य तृतीयविकृतिनिर्विकृतिकं कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्–कारणं विना न कल्पत इति ॥५-२३५॥

तथा—'कयरीपाक' इत्यादिलोकप्रसिद्धानि पाकद्रव्याणि तद्दिवसनिष्पन्नान्यार्द्रशाकप्रत्याख्यानवतां कल्पन्ते न वा? इति प्रश्नोऽत्रोत्तरम्–कल्पन्ते, ईदृशी प्रवृत्तिर्दृश्यत इति ॥ ॥६-२३६॥

तथा—मनुष्यक्षेत्राद्बहिश्चन्द्राः सूर्याश्च सन्ति ते तीर्थकृतां जन्मोत्सवे समवसरणे चायान्ति न वा? इति प्रश्नोऽत्रोत्तरम्–तेषां तीर्थकृत्कल्याणकेषु देशनाश्रवणादिकार्ये चात्रागमनप्रतिषेधो ज्ञातो नास्तीति ॥७-२३७॥

तथा—भरतक्षेत्रमध्ये सांप्रतं ये साधवः पञ्चसतशता-

दिक्कोशमध्ये दृश्यन्ते त एव किवाऽन्योऽपि क्वापि संभवन्ति ? इति प्रश्नोऽत्रोत्तरम्–भरतक्षेत्रमध्ये इदानीन्तनसमये यत्र यत्र स्थाने आत्मभिर्ज्ञायन्ते तत्रैव यतयः संभाव्यन्ते नान्यत्रेति । तथाप्यक्षरदर्शनं विनैकान्तेन कथयितुं न शक्यते यदन्यत्र स्थाने यतयो न सन्त्येवेति ॥८-२३८॥

तथा—आचामाम्लमध्ये शुण्ठीमरिचादिकं कल्पते तत्किं कारणेन स्वभावेन वा ? इति प्रश्नोऽत्रोत्तरम्–कारणं विनापि कल्पत इति ॥९-२३९॥

तथा—आचामाम्लमध्ये शुण्ठीमरिचादिकं कल्पते, पिप्पलीलवङ्गादिकं च न तत्किं शास्त्राक्षरैः परम्परातो वा? इति प्रश्नोऽत्रोत्तरम्–आचामाम्लमध्ये शुण्ठीमरिचादिकं कल्पते लवङ्गपिप्पलीहरीतकीप्रमुखं पुनर्न कल्पते तत्रैतत्कारणं ज्ञायते-यल्लवङ्गेषु दुग्धभक्तं दीयमानमस्ति, हरितकीपिप्पल्यादिकं नालिकातोऽपक्वं सत् शुष्कीक्रियते यथा सुगन्धरीगोधूमादिपृथुको राद्धः सन्नाचामाम्लमध्ये न कल्पते । सुगन्धरीगोधूमादिकं तु राद्धं सत्कल्पत इति सम्भाव्यते ॥१०-२४०॥

तथा—केनचिदुपासकेन चत्वार्युपधानान्युद्वूढानि भवन्ति, तन्मध्ये प्रथमोपधानस्य द्वादशवर्षातिक्रमे प्रथममेवोपधानं पुनरुद्वाह्य स मालां परिदधाति उत चत्वार्यपि ? इति प्रश्नोऽत्रोत्तरम्–प्रथमोपधानस्य द्वादशवर्षातिक्रमे पुनस्तस्मिन्नुद्वूढे माला परिहिता शुध्यति । अथ यदि मनः स्थाने तिष्ठति तदा चत्वार्यपि पुनरुद्वाह्य मालां परिदधातीति ॥
॥११-२४१॥

तथा—उपधाने वाह्यमाने तपोदिने यदि कल्याणकतिथिरायाति तदा तेनैवोपवासेन सरति उताऽन्योऽधिकः कृतो

विलोक्यते ? इति प्रश्नोऽत्रोत्तरम्–उपधानतपोदिनान्तः कल्याणकतिथ्यागमने नियन्त्रिततपस्तया तेनैवोपवासेन सरतीति ॥१२–२४२॥

तथा—यः श्रावको नियमेन प्रत्यहं प्रतिक्रमणद्वयं कुर्वाणो भवति तस्य कालवेलायां सन्ध्याप्रतिक्रमणविस्मरणे कियतीं रात्रिं यावत्तच्छुध्यति ? इति प्रश्नोऽत्रोत्तरम्–कारणविशेषे विस्मृतौ वा रात्रिप्रहरद्वयं यावत्तत्कर्तुं शुध्यतीति ॥१३–२४३

तथा—येन शुक्लपञ्चम्युच्चरिता भवति स यदि पर्युषणायां द्वितीयातोऽष्टमं करोति तदैकान्तेन पञ्चम्यामेकाशनकं करोति उत यथारुच्या ? इति प्रश्नोऽत्रोत्तरम्–येन शुक्लपञ्चम्युच्चरिता भवति तेन मुख्यवृत्त्या तृतीयातोऽष्टमः कार्यः । अथ कदाचिद्द्वितीयातः करोति तदा पञ्चम्यामेकाशनकरणप्रतिबन्धो नास्ति, करोति तदा भव्यमिति ॥१४-२४४॥

तथा—यदा चतुर्मासकं पूर्णिमायामभूत्तदा प्रतिक्रमणानि पञ्चविंशतिरष्टाविंशतिर्वा बभूवुः ?, तथा तानि शास्त्राक्षरबलेन विधीयमानानि परम्परातो वा ?, शास्त्राक्षरबलेन चेत्तदा तदभिधानं प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्–वर्षमध्ये प्रतिक्रमणानि पञ्चविंशतिरष्टाविंशतिर्वेति क्वापि ज्ञातं नास्ति, शास्त्रमध्ये तु दैवसिकरात्रिकपाक्षिकचातुर्मासिकसांवत्सरिकलक्षणानि पञ्च प्रतिक्रमणानि प्रतिपादितानि सन्तीति ॥१५–२४५॥

तथा—मौक्तिकानि सचित्तान्यचित्तानि वा कुत्र वा कथितानि सन्ति ? इति प्रश्नोऽत्रोत्तरम्–मौक्तिकानि विद्धान्यविद्धानि वाऽचित्तानि ज्ञेयानि, यतः श्रीमनुयोगद्वारसूत्रे मौक्तिकरत्नादीन्यचित्तपरिग्रहमध्ये कथितानि सन्तीति ॥ ॥१६–२४६॥

तथा—सर्वार्थसिद्धविमाने मौक्तिकवलयानि शास्त्रे कथितानि परम्परातो वाऽभिधीयन्ते ?, शास्त्रे चेत् तदक्षराणि प्रसाद्यानीति प्रश्नोऽत्रोत्तरम्—सर्वार्थसिद्धविमाने मौक्तिकवलयाक्षराणि त्रुटितगाथासु परम्परायां भुवनभानुकेवलिचरित्रे च सन्ति, तथा च तद्गाथाः-"तत्थ य महाविमाणे, उवरिमभागम्मि वट्टए एगं । सायररस ६४मणमाणं, मुत्ताहलमुज्जलजलोहं ॥१॥ मज्झगयस्स इमस्स य, वलयागारेण ताव सोहंति । चत्तारि मुत्तिआइं,नित्तागल ३२ मणपमाणाइं ॥२॥ पुणरवि बीए वलए, अड ८ संखाकलिअमुत्तिअफलाओ । रिउचंद १६ मणपमाणो, दिप्पइ खजलं व मलमुक्को ॥३॥ चंदकला १६ संखाइं, चंदकलानिम्मलत्तजुत्ताइं । तइए वलए अडमणपमिआइं मुत्तिआणि तओ ॥४॥ लोअणकिसाणु ३२ पमिआणि मुत्तिअफलाणि तुरिअवलयम्मि । जलहि ४ मणसरीराइं, नायव्वाइं विबुद्धेहिं ॥५॥ चेअरस ६४ संखया पुण, पंडिअ ! मुत्तिअफलाणि जाणाहि । पंचमवलयम्मि तओ, लोअण २ मणभारमाणाइ ॥६॥ कुंजरलोअणवसुहा १२८ मिआणि मुत्ताहलाणि नेआणि । इगमणभारवहाइं, छठ्ठे वलयम्मि वट्टाइं ॥७॥ मुत्ताहलमंतद्धिअणेगवज्जंतवायलहरीहिं । वलयगमुत्तिअनिअरो, समुच्छलिअ आहणेइ जया ॥८॥ एअं महाविमाणं, महुरस्वेकंतभायणं जायं । कत्थ वि अन्नत्थ न अत्थि परिसं सद्दमहुरत्तं ॥९॥ तत्थ विमाणम्मि सुरा, तआयरसेगमोहिअसचित्ता । समयम्गि ३३ सायरमिअं, सुहेण पूरंति निअमाउं" ॥१०॥ इति ॥१७-२४७॥

तथा—येषां गृहे पुत्रपुत्रीजन्म जातं भवति तद्गृहमनुजाः खरतरपक्षे स्वगृहपानीयेन देवपूजां न कुर्वन्ति, तद्यतिनोऽपि तद्गृहे दश दिनानि यावन्न विहरन्ति, तदक्षराणि

कुत्र सन्ति ? आत्मपक्षे चैतदाश्रित्य को विधिः ? इति प्रश्नोऽत्रोत्तरम्—यद्गृहे पुत्रपुत्रीप्रसवो जातो भवति तद्गृह-पानीयेन देवपूजा न शुध्यतीत्यक्षराणि शास्त्रे ज्ञातानि न सन्तीति । तथा तद्गृहविहरणमाश्रित्य यस्मिन् देशे यो लोक-व्यवहारस्तदनुसारेण यतिभिः कर्तव्यं दशदिननिर्बन्धस्तु शास्त्रे ज्ञातो नास्तीति ॥१८–२४८॥

## अथ देवगिरिसङ्घकृत-प्रश्नास्तत्प्रतिवचांसि च यथा—

पाक्षिकप्रतिक्रमणे गीतार्थैः क्षामणावसरे "नित्थारपारगा होह" इति कथ्यते तदा श्राविकादिभिरपि किमेतदेव कथनीयम् ?, उत "इच्छामो अणुसट्ठिं" इति प्रश्नोऽत्रोत्तरम्—श्रावकादिभिः "इच्छामो अणुसट्ठिं" इत्येव कथनीयं न तु "नित्थारपारगा होह" इति ॥१–२४९॥

तथा—पाक्षिकप्रतिक्रमणपर्यन्ते गीतार्था यस्य शान्ति-कथनादेशं ददति स श्रावकः दुक्खक्खयकम्मक्खयनिमित्तं काउस्सग्गं चतुर्लोगस्सप्रमाणं कृत्वा प्रकटमेकं च कथयित्वा शान्तिं कथयति, कथनानन्तरं पुनरपि पञ्चदशलोगस्सकाउ-स्सग्गं विधाय प्रकटमेकं च कथयित्वा पौषधं पारयतीति केचन कथयन्ति । केचिच्च यस्य शान्तिकथनादेशो दत्तो भवति स चतुर्लोगस्समान काउस्सग्गं कृत्वा प्रकटमेकं च कथयित्वा शान्तिं कथयति पश्चात्पौषधं पारयतीति कथयन्ति । अनयो-र्मध्ये यो विधिः प्रमाणं स प्रसाद्य इति प्रश्नोऽत्रोत्तरम्—पाक्षिकप्रतिक्रमणे शान्तेः कथयिताऽग्रतश्चतुर्लोगस्सकाउस्सग्गं कृत्वा प्रकटमेकं च कथयित्वा शान्तिं कथयति, एतावतैव शुध्यति । द्वितीयवारं पञ्चदशलोगस्सकाउस्सग्गकरणे विशेषो ज्ञातो नास्तीति ॥२–२५०॥

तथा—श्रीमहावीरस्य निर्वाणसमयेऽमावास्यातिथिः स्वातिनक्षत्रं चाभूताम्, दीपालिकासम्बन्धिगुणनसमये च कस्मिंश्चिद्वर्षे ते भवतः कस्मिंश्चिच्च नेति । एतदुपरि केचनेत्थं कथयन्ति यद् यदा स्वात्यमावास्ये भवतस्तदा गुणनीयम्; अन्ये च यस्मिन् दिने 'मेरइयां' इति लोकप्रसिद्धः क्रियाविशेषस्तस्मिन् दिने गुणनीयमिति । तत्र 'मेरइयां' करणे भेदो भवति-एतद्देशमध्ये ये गूर्जरलोकास्सन्ति तैः पाक्षिकदिने तानि कृतानि, एतद्देशीयैस्तु द्वितीयवासरे। ततः किं स्वस्वदेशानुसारेण मेरइयांकरणदिने गुणनीयम्? उत गूर्जरदेशानुसारेण? इति प्रश्नोऽत्रोत्तरम्—दीपालिकागुणनमाश्रित्य स्वस्वदेशीयलोका यस्मिन् दिने दीपालिकां कुर्वन्ति तस्मिन् दिने गुणनीयमिति ॥३-२५१॥

तथा—प्रासादे ये केचन यतयः श्राद्धाश्च प्रतिमास्नपनकरणावसरे चैत्यवन्दनां न कुर्वन्ति ते चेत्थं कथयन्ति यद्वस्थाहेतुना न क्रियत इति, इतरे च भगवतां काऽवस्था? इति यदा प्रासादे गम्यते तदा चैत्यवन्दना क्रियत इति, तत्र किं प्रमाणम्? इति प्रश्नोऽत्रोत्तरम्—प्रासादे प्रतिमास्नपनकरणावसरे चैत्यवंदनकरणप्रतिषेधो ज्ञातो नास्तीति ॥४-२५२॥

## अथ द्विपबन्दरसङ्घकृत-
## प्रश्नास्तत्प्रतिवचांसि च यथा—

देवगृहमध्ये पौषधिका यदा देवान् वन्दन्ते तदेर्यापथिकीप्रतिक्रमणावसरे उत्तरासङ्गं कृतं विलोक्यते न वा? इति प्रश्नोऽत्रोत्तरम्—यदा देवगृहमध्ये पौषधिका देवान् वन्दन्ते तदेर्यापथिकीप्रतिक्रमणावसरे उत्तरासङ्गस्य कार्यं दृश्यमानं नास्ति, वृद्धा अपीत्थमेव कथयन्तः श्रुतास्सन्ति । किञ्च

ईर्यापथिकी देववन्दनक्रियामध्ये नास्ति, तेन देववन्दनायां क्रियमाणायामन्यदा च देवगृहमध्येऽवस्थितावुत्तरासङ्गं कृत विलोक्यते, क्रिया तु विधिनैव भवतीति ॥१-२५३॥

तथा—प्रभातप्रतिक्रमणसमये प्रथमत कुसुमिणदुसुमिणउहडावणिअं काउस्सग्गं चतुर्लोगस्समानं करोति तदा "चदेसु निम्मलयरा" इतियावत् "सागरवरगंभीरा" इतियावद्वा ? इति प्रश्नोऽत्रोत्तरम्–सामान्येन "चंदेसु निम्मलयरा" इतियावत्करोति । यदा पुन स्वप्ने तुर्यव्रतातिचारो जातो भवति तदा नमस्कारमेकमधिक चिन्तयतीति ॥२-२५४॥

तथा—प्रभातप्रतिक्रमणे प्रथमतः कुसुमिणदुसुमिणकाउस्सग्गं चैत्यवन्दनां च कृत्वा चत्वारि क्षमाश्रमणानि ददाति तत स्वाध्याय करोति ? उत स्वाध्यायं कृत्वा क्षमाश्रमणानि ददाति ? इति प्रश्नोऽत्रोत्तरम्–प्रभातप्रतिक्रमणे प्रथमतश्चतुर्लोगस्समानं काउस्सग्ग चैत्यवन्दनां च कृत्वा चत्वारि क्षमाश्रमणानि दत्वा क्षमाश्रमणयुगेन स्वाध्यायं च कृत्वा प्रतिक्रमणं करोति । यत उक्तम्–"इरियाकुसुमिणुसग्गो, जिणमुणिवदण तहेव सज्झाओ । सव्वस्स वि सक्कयओ, तिन्नि य उस्सग्ग कायव्वा" ॥१॥ एषा गाथा श्रीसोमसुन्दरसूरिकृतसामाचारीमध्ये वर्तते । तथा श्रीविजयदानसूरयोऽपीत्थमेव कृतवन्तस्तच्छिक्षया च वयमपि तथैव कुर्मं इति । अथ स्वाध्यायानन्तरं चत्वारि क्षमाश्रमणानि देयानीतिविधिः क्वापि ग्रन्थे वर्तते, तस्यापि प्रतिषेधो नास्ति परं यथा वृद्धा कृतवन्तस्तथैवेदानीं कुर्मं इति ॥३-२५५॥

तथा—उष्णकालादावुष्णं प्रासुकं वा पानीयं पञ्चादिप्रहरं यावदचित्तं ततः परं सचित्तं भवतीत्यक्षराणि कुत्र सन्ति ?। तथा तत्र यावत्त्रसजीवोत्पत्तिर्जाता न भवति ताव-

संगालितं तत्पातुं कल्पते न वा ? इति प्रश्नोऽत्रोत्तरम्—उष्ण-कालादावुष्णं प्रासुकं वा पानीयं पञ्चादिप्रहरं यावदचित्तं ततः परं सचित्तं भवतीत्यक्षराणि प्रवचनसारोद्धारसूत्रवृत्तिमध्ये प्रोक्तानि सन्ति । तथा तत्र त्रसजीवोत्पत्तिर्जाता भवतु मा वा तथापि गालितमेव तद्दयापारणीयं नाऽगालितमिति परम्परा दृश्यत इति ॥४-२५६॥

तथा—पञ्चमीतिथिस्त्रुटिता भवति तदा तत्तपः कस्यां तिथौ क्रियते ?, पूर्णिमायां च त्रुटितायां कुत्र ? इति प्रश्नोऽत्रोत्तरम्—पञ्चमीतिथिस्त्रुटिता भवति तदा तत्तपः पूर्वस्यां तिथौ क्रियते । पूर्णिमायां च त्रुटितायां त्रयोदशीचतुर्दश्योः क्रियते, त्रयोदश्यां विस्मृतौ तु प्रतिपद्यपीति ॥५-२५७॥

तथा—अक्षमालादिका स्थापना या नमस्कारेण विधीयते तदुपर्युद्योते दृष्टिरक्षणं सुकरम्, अन्धकारे च कथं भवति ? तद्विना च स्थापना शुध्यति न वा ? इति प्रश्नोऽत्रोत्तरम्—अक्षमालापुस्तकादिकस्थापना नमस्कारेण स्थाप्यते, स्थापनानन्तरं च क्रियाकरणं यावदुद्योते यथाशक्ति दृष्ट्युपयोगौ रक्ष्येते, अन्धकारे चोपयोगः । दृष्ट्युपयोगयोरन्तरे जाते तु पुनः स्थापनां कृत्वाऽग्रतः क्रिया क्रियते । यतः स्थापना द्वेधा, इत्वरा यावत्कथिका च । तत्रेत्वराऽक्षमालादिका या नमस्कारेण स्वयं स्थापिता सा दृष्ट्युपयोगयोः सतोरेव तिष्ठति । यावत्कथिका चाक्षप्रतिमादिका या गुरुसकाशात्स्थाप्यते, सा पुनः पुनः स्थापिता न विलोक्यत इति ॥६-२५८॥

तथा—मालापरिधाने प्रवेदनकं करोति न वा ? इति प्रश्नोऽत्रोत्तरम्—मालापरिधाने प्रवेदनककरणनियमो ज्ञातो नास्तीति ॥७-२५९॥

तथा—उपधानपूर्णभवनानन्तरं तपोवासरे उत्तरितुं कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्—उपधानपूर्णभवनानन्तरं तपोवासरे नोत्तीर्यते। तथाविधकारणे गीतार्थाऽऽज्ञापूर्वकमुत्तरणे एकान्तेन निषेधो ज्ञातो नास्तीति ॥८-२६०॥

तथा—केचित्पृच्छन्ति नन्दिमण्डनाक्षराणि कुत्र सिद्धान्ते वर्तन्ते? इति प्रश्नोऽत्रोत्तरम्—नन्दिमण्डनाक्षराण्यनुयोगद्वारवृत्तिसामाचारीप्रमुखग्रन्थेषु वर्तन्ते। तथा परम्परयाऽपि नन्दिर्मण्ड्यमाना ज्ञायत इति ॥९-२६१॥

तथा—पौषधमध्ये सामायिकद्वात्रिंशद्दोषा लगन्ति न वा इति प्रश्नोऽत्रोत्तरम्—सामायिकद्वात्रिंशद्दोषाः पौषधमध्ये लगन्तो ज्ञायन्ते ततस्तानुत्सर्गतो न लगयति। कारणे यदि लगयति तदाऽऽलोचयति प्रतिक्रामतीति ॥१०-२६२॥

तथा—पौषधे शकलातसंस्तारिकं व्यापारयितुं कल्पते न वा? इति, तथा तम्बोलो भक्षयितुं कल्पते न वा? इति, तथा जैमनोपकरणानि कथं गृह्यन्ते? यतस्तत्र मुत्कलानीतं वस्तु कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्—शकलातसंस्तारिकं पौषधमध्ये व्यापारयितुं कल्पते। तथा तम्बोलो लवङ्गकाष्ठा[1]दिकः कारणे पौषधमध्ये भक्षयितुं कल्पते। तथा मुत्कलानीतोपकरणानां शुध्यमानतानिषेधो ज्ञातो नास्तीति ॥११-२६३॥

तथा—देवा यदा स्वकीयेतरकल्पे यान्ति तदा तत्रस्थानि चैत्यानि वन्दन्ते न वा? इति प्रश्नोऽत्रोत्तरम्—देवा यदा स्वकीयेतरदेवलोके यान्ति तदा तत्रत्यचैत्यवन्दननिषेधो ज्ञातो नास्तीति ॥१२-२६४॥

१ 'काष्ठिकादिक'मिति प्रत्यन्तरे।

तथा—जम्बूद्वीपगतमेरोः परितो यथैकविंशत्यधिकैकादशशतयोजनान्यबाधां कृत्वा ज्योतिश्चक्रं भ्राम्यति तथाऽन्यद्वीपगतमेरुभ्योऽपि कियतीमबाधां कृत्वा भ्रमति? इति प्रश्नोऽत्रोत्तरम्—जम्बूद्वीपगतमेरोः परितो यथैकविंशत्यधिकैकादशशतयोजनान्यबाधां कृत्वा ज्योतिश्चक्रं भ्राम्यति तथैवान्यद्वीपगतमेरुभ्योऽपीति सम्भाव्यते, शास्त्राक्षराणि तु व्यक्ततया दृष्टानि न स्मरन्तीति ॥१३-२६५॥

तथा—कायोत्सर्गे वन्दनकदानावसरे च स्थापनाचार्यचालनं शुध्यति न वा? इति प्रश्नोऽत्रोत्तरम्—कायोत्सर्गकरणावसरे वन्दनकदानावसरे च स्थापनाचार्यचालनं न शुध्यतीत्येकान्तो ज्ञातो नास्तीति ॥१४-२६६॥

तथा—मतान्तरीयस्य कदाचिदुपवासादिप्रत्याख्यानं कार्यते तत्र "पाणस्स" इत्युच्चारणमाश्रित्य किं विधेयम्? यतस्तस्य कसेल्लकादिपानीयपाने कथं तत्पालनं भवति? इति प्रश्नोऽत्रोत्तरम्—मतान्तरीयस्य प्रत्याख्यानकरणे "पाणस्स" इत्युच्चारणे स यदि कसेल्लकादिपानीयं पिबति तदा प्रत्याख्यानभङ्गो ज्ञातो नास्ति, यतः कसेल्लकक्षेपेऽपि पानीयं प्रासुकं भवति, परमात्मनामाचरणा नास्तीति न गृह्यत इति ॥१५-२६७॥

तथा—साम्प्रतं क्रियमाणः स्नात्रादिविधिः केन कृतः? कुत्र वा ग्रन्थे वर्तते? इति प्रश्नोऽत्रोत्तरम्—साम्प्रतं क्रियमाणः स्नात्रादिविधिः कियान् परम्परया कियांश्च श्राद्धविधिमध्ये कथितोऽस्तीति ॥१६-२६८॥

तथा—केवली केवलिसमुद्घातं यदा करोति तदाऽऽत्मप्रदेशैस्त्रसनाडीमेव पूरयति किंवा सम्पूर्णं लोकम्? इति

प्रश्नोऽत्रोत्तरम्–केवली केवलिसमुद्घातं यदा करोति तदा सम्पूर्णं लोकं पूरयतीति ॥१७-२६९॥

तथा—चतुर्विंशतिपट्टपञ्चतीर्थीप्रतिमादिषु ऋषभादितीर्थकृतः केनानुक्रमेण गण्यन्ते ?, तथा सूत्रधारसम्बन्धि 'गज' इति प्रसिद्धमानेन भूमिकातः सार्धहस्तोच्चप्रदेशे देवावसरकरणं प्रोक्तमस्ति तदुत्कृष्टकालादावात्माङ्गुलवृद्धिहानिभवने कथं घटते ? इति प्रश्नोऽत्रोत्तरम्–चतुर्विंशतिपट्टपञ्चतीर्थीप्रतिमादिषु ऋषभादितीर्थकृतोऽनेनैवानुक्रमेण गण्यन्त इत्येकान्तो ज्ञातो नास्ति। तथा सूत्रधारसम्बन्धि "गज" इति प्रसिद्धमानानुसारेण भूमिकातः सार्धहस्तोच्चप्रदेशे देवावसरकरणे उत्कृष्टकालादावात्माङ्गुलवृद्धिहानिभवनेऽपि काऽप्यघटमानता नास्ति, यत आत्माङ्गुलवृद्ध्यादौ "गज" इति प्रसिद्धमानमपि तदनुसारेणैव भवतीति ॥१८-२७०॥

तथा—उपधानविधिरेकान्तरोपवासैस्तद्वाहनं च कुत्र शास्त्रे केन वा ते कथिते स्तः ? इति प्रश्नोऽत्रोत्तरम्–उपधानविधिरेकान्तरोपवासैस्तद्वाहनं च महानिशीथसामाचारीप्रमुखग्रन्थानुसारेण परम्परानुसारेण च ज्ञातव्ये इति ॥ १९-२७१॥

तथा—"कयरीपाक" इत्यादिलोकप्रसिद्धद्रव्याण्यासवाद्याऽऽर्द्रशाकावयवनिष्पन्नतया तत्प्रत्याख्यानवतां कल्पन्ते न वा ? इति प्रश्नोऽत्रोत्तरम्–"कयरीपाक" इत्यादिलोकप्रसिद्धद्रव्याण्यासवाद्याऽऽर्द्रशाकावयवनिष्पन्नान्यपि तत्प्रत्याख्यानवतां कल्पन्त इति प्रवृत्तिर्दृश्यत:इति ॥२०-२७२॥

तथा—पौषदशमीरात्रौ श्रीपार्श्वनाथजन्मकल्याणकं, तत्र सा रात्रिः किं नवमीदशम्योरन्तरा ? उत दशम्येकादश्योर

न्तरा ? इति; तथा तत् स्नात्रं दशम्यामेकादश्यां वा क्रियते ? इति प्रश्नोऽत्रोत्तरम्—पार्श्वनाथजन्मकल्याणकं दशमीरात्रौ जातमस्ति ततो दशमीदिने स्नात्रं करणीयमिति ॥२१-२७३॥

तथा—प्रतिक्रमणे आलोचनानन्तरं "ठाणे कमणे" इत्यादि कथयित्वा गमनागमनाऽऽलोचनादेशो मार्ग्यते, तत्र केचित्कथयन्ति न मार्ग्यते, तदाश्रित्य यथा भवति तथा प्रसाद्यम्। तथा केचित्कथयन्ति हस्तशताद् बहिर्गमने गमनागमनालोचनादेशो मार्ग्यते, केचिच्चाप्रमार्जितभूमिगमने, इत्येतदाश्रित्यापि यथोचितं प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—प्रतिक्रमणे आलोचनानन्तरं "ठाणे कमणे" इत्यादि कथयित्वा गमनागमनालोचनादेशो मार्गणीयो ज्ञायते। तथा पौषधमध्ये स्थण्डिलादिकार्ये बहिर्गत्वाऽऽगमनानन्तरं गमनागमनाऽऽलोचनं ज्ञायत इति ॥२२-२७४॥

तथा—पौषधे उच्चारिते कः सावद्यव्यापारः स्थितो वर्तते यदर्थं सामायिकमुच्चार्यते ? तथा पौषधे देशावकाशिकं नोच्चार्यते सामायिके चोच्चार्यते तत्र किं प्रयोजनम् ? इति प्रश्नोऽत्रोत्तरम्—पौषधकरणानन्तरं यत् सामायिकमुच्चार्यते तत् सहजापतितं नवमव्रताराधनार्थम्, यत्पुनर्देशावकाशिकं न क्रियते तत्पौषधिको निरवद्यतया गमनादौ प्रवर्तते तेन तत्करणे किं प्रयोजनम् ? इति। सामायिकमध्ये देशावकाशिककरणं तु सामायिके द्विघटिकामाने पारितेऽपि ततः परं विरतिकरणार्थमिति ॥२३-२७५॥

तथा—द्विदलमाश्रित्य केचिदित्थं वदन्ति-यद्विदलतक्रमुखत्रयसंयोगे तत्र जीवा उत्पद्यन्ते, केचित्तु द्विदलतक्रसंयोगे, इत्येतदुपरि यच्छास्त्रानुसारि भवति तत्प्रसाद्यमिति प्रश्नोऽ-

त्रोत्तरम्–द्विदलमध्येऽपक्वदुग्धदधितक्रसंयोगे जीवा उत्पद्यमाना ज्ञातास्सन्ति शास्त्रानुसारेणापि । मुखसंयोगे तत्र जीवा उत्पद्यन्त इति तु ज्ञातं नास्तीति ॥२४–२७६॥

तथा—साधारणप्रासादे प्रतिमायां कार्यमाणायां ग्रामनाम्ना प्रतिमा विलोक्यते ? उत सङ्घराशिनाम्ना ? यदि सङ्घराशिनाम्ना तदा सर्वग्रामसङ्घानामेकमेव राशिनाम विद्यते, तेन यथा युक्तं भवति तथा प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्–साधारणप्रासादे प्रतिमायां कार्यमाणायां ग्रामनाम्ना प्रतिमा विलोक्यत इति युक्तं ज्ञायत इति ॥२५–२७७॥

तथा—पञ्चव्रतसंक्षेपरूपा प्रत्यहं द्विर्दिग्गमनविरतिर्देशावकाशिकाख्ये दशमव्रते, चतुर्दशनियमास्तु भोगोपभोगविरमणाख्ये सप्तमव्रते, तत्कथं देशावकाशिककरणेनैव ते उच्चार्यन्ते ? इति प्रश्नोऽत्रोत्तरम्–देशावकाशिकं द्वेधा, एकं पञ्चव्रतसंक्षेपरूपम् , द्वितीयं सर्वव्रतसंक्षेपरूपं क्रियमाणमस्तीति न कापि विप्रतिपत्तिरिति ॥२६–२७८॥

तथा—उपधानवाचना नमस्कारं विना दीयते उत तत्पूर्विका ? इति प्रश्नोऽत्रोत्तरम्–उपधानवाचनां श्रीविजयदानसूरयो नमस्कारं विनैव दत्तवन्तो वयमपि तथैव दद्म इति ॥ ॥२७–२७९॥

तथा—उपधानवाचना पारणादिने उत तपोदिने ? तथा उपधानवाचना प्रातः सन्ध्यायां वा दीयते ? इति प्रश्नोऽत्रोत्तरम्–उपधानवाचना तपोवासरे पारणादिने वा दत्ता शुध्यति। तथोपधानवाचनाऽऽचामाम्लैकाशनककरणानन्तरं सन्ध्यायामपि दत्ता शुध्यति, परं प्रतिदिनक्रियमाणसन्ध्यासमयक्रिया पश्चात्क्रियते ॥२८–२८०॥

तथा—चतुर्मासकमध्ये मालारोपणनन्दिः कुतः प्रभृति विधीयते ? इति प्रश्नोऽत्रोत्तरम्–चतुर्मासकमध्ये तुर्यव्रतमालारोपणनन्दी विजयदशम्यनन्तरं भवतः । द्वादशव्रतनन्दी त्ववर्गापि भवन्ती दृश्यत इति ॥२९-२८१॥

तथा—उपधानमध्ये आर्द्रशाकभक्षणं कल्पते न वा ? तथा विलेपनमस्तकतैलप्रक्षेपादिकं कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्–उपधानमध्ये सांप्रतमार्द्रशाकभक्षणरीतिर्नास्ति । तथा विलेपनमस्तकतैलक्षेपादिकं यतिवत्स्वयं न वाञ्छति, अन्यः कश्चिद्यदि भक्तिं करोति तदा निषेधो ज्ञातो नास्तीति ॥३०-२८२॥

तथा—श्रावकश्राविकाणां नन्दीसूत्रश्रावणं "नाणं पंचविहं पन्नत्तं" इत्यादिरूपं नमस्कारत्रयरूपं वा क्रियते ? इति प्रश्नोऽत्रोत्तरम्–श्रावकश्राविकाणां नन्दीसूत्रं नमस्कारत्रयरूपं श्राव्यत इति ॥३१-२८३॥

तथा—उपधानवाचनां श्राद्धाः श्राद्धयश्चोर्ध्वस्थानेन गृह्णन्ति उपविश्य वा ? इति प्रश्नोऽत्रोत्तरम्–उपधानवाचनां श्राद्धय ऊर्ध्वस्थिताः शृण्वन्ति, श्राद्धास्तु चैत्यवन्दनमुद्रयेति ॥३२-२८४॥

तथा—पौषधिकः श्राद्धो वस्त्रेण मस्तकं बन्धयित्वा देवगृहमध्ये गत्वा देववन्दनं करोति न वा ? इति प्रश्नोऽत्रोत्तरम्–पौषधिकश्राद्धस्य मुख्यवृत्त्या मस्तकबन्धनाधिकारो नास्ति, कारणे पुनः "फालीउं" इति प्रसिद्धवस्त्रेण बन्धने देवगृहमध्ये देववन्दनादिक्रियायां क्रियमाणायां छोटितं विलोक्यते । अन्यो विशेषो ज्ञातो नास्तीति ॥३३-२८५॥

तथा—सांवत्सरिकपाक्षिकाष्टमीज्ञानपञ्चमारोहिणीतपांसि येन यावज्जीवमुच्चारितानि भवन्ति स रोहिण्या अग्रतः पृष्ठतो वाऽऽगमने षष्ठकरणशक्त्यभावे किं करोति ? इति प्रश्नोऽत्रोत्तरम्—सर्वथा षष्ठकरणशक्त्यभावे यत्तपः प्रथममागच्छति तत्तपः प्रथमं करोति, स्थितं तु पश्चात्कृत्वा प्रापयतीति ॥३४-२८६॥

तथा—श्राद्धानामेकादशाङ्गेषु श्राव्यमाणेषु नन्दिर्मण्डिता विलोक्यते न वा ? इति प्रश्नोऽत्रोत्तरम्—श्राद्धानामेकादशाङ्गश्रावणे नन्दिमण्डनाधिकारो ज्ञातो नास्तीति ॥३५-२८७॥

तथा—अन्यतीर्थियः कश्चिद्यदि तुर्यव्रतमुच्चारयति तदा किं नन्दिं विनाऽप्युच्चार्यते ? उत नन्दिसहितमेव ? इति प्रश्नोऽत्रोत्तरम्—अन्यतीर्थियः कश्चित् तुर्यव्रतमुच्चारयति तदा नन्दिं विनाऽप्युच्चार्यते, तदाश्रित्य निषेधः कोऽपि ज्ञातो नास्तीति ॥३६-२८८॥

तथा—पौषधिकः श्राद्धो यदाहारं गृह्णाति तदा तस्य जेमनानन्तरं चैत्यवन्दनाकरणमन्तरा पानीयं पातुं शुध्यति न वा ?, तथा स्वाभाविक उपधानवाहकश्चाहारग्राहकपौषधिकः सन्ध्यासमयप्रतिलेखनां केनानुक्रमेण करोति ? इति प्रश्नोऽत्रोत्तरम्—पौषधिकश्राद्धस्याहारग्रहणानन्तरं चैत्यवन्दनायां कृतायामेव पानीयं पातुं शुध्यति नान्यथा, यतः पौषधमध्ये श्राद्धस्यापि यद्वी क्रियारीतिर्यतिवदेव वर्तते । तथाऽऽहारग्राहकपौषधिकः सन्ध्यासमये प्रतिलेखनामुखवस्त्रिकां प्रतिलिख्य परिधानां शुकं परावृत्य "पडिलेहणा पडिलेहावो" इत्यादेशं मार्गयित्वा तत्कृत्यं विधाय उपधिमुखपट्टीं प्रतिलिख्य स्वाध्यायं कृत्वा वन्दनकद्वयं दत्त्वा प्रत्याख्यानं कृत्वा "उपधि

संदिसावुं, उपधि पडिलेहुं" इत्यादेशद्विकं क्षमाश्रमणद्विकेन मार्गयतीति सामाचारी वर्तते। उपधानपौषधिकस्याऽयं विशेषः- यत्पानीयसारणानन्तरं गुरुपार्श्वे स्थापनाचार्यपार्श्वे वा मुखवस्त्रिकां प्रतिलिख्य वन्दनकद्वयं दत्त्वा च प्रत्याख्यानं करोति, न पुनः प्रतिलेखनासमये वन्दनकदानप्रत्याख्याने करोति। अन्यदन्तरं तु ज्ञातं नास्तीति ॥३७-२८९॥

तथा—रात्रिपौषधिकः प्रस्रवणोच्चारभूम्योः कति मण्डलकानि करोति ? इति प्रश्नोऽत्रोत्तरम्—रात्रिपौषधिकः प्रस्रवणोच्चारपरिष्ठापनभूम्योश्चतुर्विंशतिमण्डलकानि करोति। द्वादश मध्ये द्वादश बहिश्च, "बारस बारस तिन्नि अ" इति वचनादिति ॥३८-२९०॥

तथा—यः सन्ध्यायां रात्रिपौषधं करोति स तदुच्चारणानन्तरं पानीयं पिबति न वा ? इति प्रश्नोऽत्रोत्तरम्—यः सन्ध्यायां रात्रिपौषधं करोति तस्याऽऽहारपौषधः सर्वत एवोच्चार्यते न देशतस्तेन दिवसपौषधो भवतु मा वा परं रात्रिपौषधकरणानन्तरं स पानीयं न पिबतीति ॥३९-२९१॥

तथा—त्रिविधाहारप्रत्याख्याननिर्विकृतिकैकाशनकद्वयासनकेषु कृतेष्वार्द्रशाकभक्षणं शुध्यति न वा ? इति प्रश्नोऽत्रोत्तरम्—निर्विकृत्यादिषु त्रिविधाहारप्रत्याख्यानेष्वेकान्तेनार्द्रशाकभक्षणनिषेधो ज्ञातो नास्ति, संवरार्थं न गृह्णाति तदा वरमिति ॥४०-२९२॥

तथा—दिवसपौषधिकः सन्ध्यासमयप्रतिलेखनां कृत्वा यदि रात्रिपौषधं करोति तदा किं प्रतिलेखनाऽऽदेशान् पुनरपि मार्गयति ? उत प्राग्मार्गितरेव तैः शुध्यति ? इति प्रश्नोऽ-

त्रोत्तरम्–प्रतिलेखनाऽऽदेशाः पुनर्मार्गिता न विलोक्यन्त इति ॥४१–२९३॥

तथा—एकाशनसहितनिर्विकृतिप्रत्याख्यानैकाशनकप्रत्याख्यानयोरुच्चारे किमन्तरम् ? इति प्रश्नोऽत्रोत्तरम्–निर्विकृतिकैकाशनकप्रत्याख्यानयोरेतावदेवान्तरमस्ति यन्निर्विकृतिकप्रत्याख्याने 'निव्विगइय पच्चक्खामि" इति उच्चार्यते, एकाशनकप्रत्याख्याने तु "विगइयं पच्चक्खामि" इति। अन्यत्सर्वं सदृशमस्ति। तथैतदप्यन्तरमस्ति—यन्निर्विकृतिकप्रत्याख्यानं त्रिविधाहारचतुर्विधाहाररूपं भवति, एकाशनकप्रत्याख्यानं तु द्विविधाहाररूपमपीति ॥४२–२९४॥

तथा—पौषधसामायिकयोर्ग्रहणानन्तरं तयोः पारणकालेऽप्राप्ते ग्राहकशरीरे क्षामनायां किं विधेयम् ? इति प्रश्नोऽत्रोत्तरम्–पौषधसामायिकयोः पारणकालेऽप्राप्ते यदि ग्राहकस्य शरीरक्षामना भवति तदा स वेलाप्राप्त्यनन्तरं सावधानतामयने यथाशक्ति तत्पारणाचारं सत्यापयति, यदि ग्राहकः सावधानो न भवति तदा समीपस्था अन्ये वेलायां प्राप्तायां पारणविधिं श्रावयन्ति, यावच्च न श्रावितस्तावन्महतीं विराधनां कर्तुं न ददतीति सम्भाव्यत इति ॥४३–२९५॥

तथा—आरात्रिकमङ्गलप्रदीपः सृष्ट्या संहारेण चोत्तार्यते ? तदुत्तारणपाठश्च कः ? इति प्रश्नोऽत्रोत्तरम्–जिनप्रतिमाऽग्रे आरात्रिकमङ्गलप्रदीपः सृष्ट्योत्तार्यते न तु संहारेण। पूर्वाचार्यप्रणीतग्रन्थमध्ये क्वापि संहारोत्तारणस्याप्यक्षराणि सन्ति परमिदानीं श्राद्धविधिजिनप्रभसूरिकृतपूजाप्रकरणयोः सृष्ट्यैवोत्तारणमुक्तमस्ति तेन तथैव क्रियते। तदुत्तारणगाथा च–"मरगयमणिघडियविसालथालमाणिक्कमंडियपईवो। ण्हव-

णपरकरुक्खित्तो भमिउ जिणाररियं तुम्हं" ॥१॥ इति ॥
॥४४-२९६॥

तथा—श्राद्धानां यद्येकादशाङ्गानि श्राव्यन्ते तदा किं प्रथमचतुर्थयोरेव प्रहरयोः ? उत द्वितीयतृतीययोरपि ? इति प्रश्नोऽत्रोत्तरम्—श्राद्धानामेकादशाङ्गानि सूत्रतः श्राव्यन्ते तदा प्रथमचतुर्थयोः प्रहरयोः श्रावितानि शुध्यन्ति । अर्थसहितानि तु द्वितीयतृतीययोरपीति ॥४५-२९७॥

## अथ डुङ्गरपुरसङ्घकृत-
## प्रश्नास्तत्प्रतिवचांसि च यथा—

सप्तदशभेदपूजायामष्टमङ्गलस्थालभरणे पूजानन्तरं तदपनयने तदन्तर्गतमत्स्युगलाकारस्यापि भङ्गे पातकं भवति न वा ? इति प्रश्नोऽत्रोत्तरम्—अष्टमङ्गलमध्ये मत्स्याकारस्य विधानं शास्त्रानुसारितया युक्तमेव वर्तते । पूजानन्तरं तदपनयनमपि युक्तमेव प्रतिभासते । तथा यो मन्यते तस्य युक्तिरपि तन्नेदृशी वर्तते, तथाहि-इन्द्रो यदा जिनजन्मोत्सवं कर्तुं समायाति तदा पूर्वं भगवज्जन्मगृहे आगत्य मातुः पार्श्वाद्भगवन्तं गृहीत्वा तत्प्रतिबिम्बं च तत्र मुक्त्वा मेरौ गत्वा जन्माभिषेकं च कृत्वा पुनरपि तत्राऽऽगत्य मातुः पार्श्वे भगवन्तं मुक्त्वा प्रतिबिम्बं विसर्जयति । तथा नवीनपित्तलादिप्रतिमायां क्रियमाणायां प्रथमं मदनाकारं विधायोपरि मृत्तिकां दत्त्वा मदनं मध्यतो गालयित्वा छदति । अत्र पूर्वत्र च हिंसापरिणामं विना यथा पातकं न भवति तथा मत्स्ययुगलापनयनेऽपि ज्ञेयमिति ॥१-२९८॥

तथा—जिनप्रतिमानां तान्येवाभरणानि प्रतिदिनं परिधाप्यन्ते, अथ तेषां निर्माल्यता कथं न भवति ? इति प्रश्नो-

ऽस्रोत्तरम्–एतदाश्रित्य शास्त्रमध्ये एवं कथितमस्ति यद् "भोगविनष्टं द्रव्यं निर्माल्यम्" इति। तेनाऽऽभरणानां भोगविनष्टत्वाभावेन निर्माल्यता न भवतीति ज्ञेयमिति ॥२-२९९॥

तथा—विष्णुकुमारसम्बन्धः कुत्र ग्रन्थे वर्तते ?, तथा तेन यल्लक्षयोजनप्रमाणं रूपं कृतं श्रूयते तत्किमुत्सेधाङ्गुलनिष्पन्नेन योजनेन प्रमाणाङ्गुलनिष्पन्नेन वा ?, तथा तेन पूर्वपश्चिमसमुद्रयोः पादौ मुक्तौ स्त इत्यप्युक्तमस्ति, तेनैतदाश्रित्य यथा घटमानं भवति तथा प्रसाद्यमिति प्रश्नोऽस्रोत्तरम्–विष्णुकुमारसंबन्ध उत्तराध्ययनवृत्त्युपदेशमालावृत्तिप्रमुखग्रन्थेषु वर्तते। तथा तेन यल्लक्षयोजनप्रमाणं रूपं कृतं वर्तते तदुत्सेधाङ्गुलनिष्पन्नयोजनप्रमाणेन। यत्पुनः पूर्वपश्चिमसमुद्रयोः पादौ मुक्तौ तज्जम्बूद्वीपमध्यस्थलवणसमुद्रखातिकायामिति सम्भाव्यते, अन्यथोत्सेधाङ्गुलनिष्पन्नलक्षयोजनप्रमाणशरीरस्य तस्य चरणाभ्यां पूर्वपश्चिमलवणसमुद्रस्पर्शनं दुःशकमिति ॥ ॥३-३००॥

## अथ सिद्धपुरसङ्घकृतप्रश्ना-स्तत्प्रतिवचांसि च यथा–

प्रतिवासुदेवे गर्भावतीर्णे तन्माता कियतः स्वप्नान् पश्यति ? इति प्रश्नोऽस्रोत्तरम्–त्रीन् स्वप्नान् पश्यतीति [1]ज्ञायते सप्ततिशतस्थानकशान्तिचरित्राद्यनुसारेणेति ॥१-३०१॥

तथा—तद्दिनतलितपक्वान्नं कटाहविकृतिप्रत्याख्यानवतः कल्पते न वा ? इति प्रश्नोऽस्रोत्तरम्–तद्दिनतलितपक्वान्नं कटाहविकृतिप्रत्याख्यानवत प्रत्याख्यानकरणसमये यदि मुत्कल

१ ज्ञायते इत्यन्तः पाठ. प्र० ।

रक्षितं भवति तदा कल्पते नान्यथेति परम्परा दृश्यत इति ॥२-३०२॥

तथा—चतुर्मासकमध्ये सार्धद्विगव्यूतप्रमाणनदीमुत्तीर्याऽऽहारग्रहणार्थमिव वन्दनार्थं क्षामणार्थं वा गम्यते न वा ? इति प्रश्नोऽत्रोत्तरम्–चतुर्मासकमध्ये सार्धद्विगव्यूतप्रमाणनदीमुत्तीर्य भिक्षाग्रहणार्थमिवैकं पादं जले कृत्वैकं पादं स्थले कृत्वा यदि वन्दनार्थं क्षामणार्थं वा व्रजति तदा शास्त्रानुसारेणैकान्तिको निषेधो नास्ति, परमिदानीं प्रवृत्तिर्न दृश्यत इति ॥३-३०३॥

## अथ धायताग्रामसत्कसङ्घ–कृतप्रश्नास्तत्प्रतिवचांसि च यथा—

द्वयोः श्राद्धयोः प्रतिक्रमणकरणसमयेऽथवा सामायिके कृते सत्येकस्य हस्तादपरेण चरवलके पातिते उभयोर्मध्ये कस्येर्यापथिकी समायाति ? किमुभावपि प्रतिक्रामत एको वा ? इति प्रश्नोऽत्रोत्तरम्–द्वयोः श्राद्धयोः प्रतिक्रमणकरणादौ सावधानतयैकेन चरवलको गृहीता भवति, अथ यदि द्वितीयहस्तलग्नेन हेतुना पतति तदा तस्येर्यापथिकी समायाति। यदि च गृहीतोऽप्यसावधानतयैव तदोभयोरपीर्यापथिकी समायातीति ॥१-३०४॥

तथा—यः शुद्धक्रियां कुर्वाणः शुद्धाचारं च पालयन्नीर्यापथिकीमागतां न जानाति स कियद्भिर्मुहूर्तैस्तां प्रतिक्रामति ? इतिप्रश्नोऽत्रोत्तरम्–शुद्धक्रियायां क्रियमाणायां सोपयोगतया प्रमार्जनादिविधिनोपवेशनादिष्वीर्यापथिकी नायाति, यतस्तामाश्रित्य कालमानमुक्तं ज्ञातं नास्ति। तथापि क्रियान्तरे क्रियमाणे ईर्यापथिकी प्रतिक्रम्यते, यतो महत्यां वे यां

मनोवचःकायोययोगानां सम्यगवबोधो न भवतीति ॥२-३०५॥

तथा—अष्टापदपर्वते भरतचक्रवर्तिकारिताः सिंहनिषद्याप्रमुखप्रासादास्तद्गतबिम्बानि चाद्ययावत्कथं स्थितानि सन्ति ?, तथा शत्रुञ्जयपर्वतेऽपि भरतकारितान्येव प्रासादबिम्बानि कथं न स्थितानि ? यतस्तत्रासङ्ख्याता उद्धारा जाताः श्रूयन्ते, तेनाष्टापदे कस्य सान्निध्यम् ? शत्रुञ्जये च कस्य न ? यदेतावान् भेद इति व्यक्त्या प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—

अष्टापदपर्वते भरतचक्रवर्तिकारितप्रासादादीनां स्थानस्य निरपायत्वाद्देवादिसान्निध्यात् "केवइयं पुण कालं आययणं अवसज्जिस्सइ ? ततो तेण अमच्चेण भणियं—जाव इमा उसप्पिणि त्ति मे केवलिजिणाण अंतिए सुयं" इत्यादिवसुदेवहिण्ड्यक्षरसद्भावाच्चाद्ययावदवस्थानं युक्तिमदेव । शत्रुञ्जये तु स्थानस्य सापायत्वात्तथाविधदेवादिसांनिध्याभावाच्च भरतकारितप्रासादादीनामद्ययावदवस्थानाभाव इति सम्भाव्यते । तत्त्वं तु तत्त्वविद्वेद्यमिति ॥३-३०६॥

इति श्रीसकलसूरिपुरन्दरपरमगुरुतपागच्छाधिराजभट्टारकश्री ५ श्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्यपण्डितकीर्तिविजयगणिसमुच्चिते चतुर्थः प्रकाशः ॥



